गृहस्थाश्च सदाचाराः पूजादानादितत्पराः ।
एकादिकं यथाशक्ति प्रतिमारूपं व्रतं दधुः ॥ १०१ ॥
किन्त्वैकादशसंख्यव्रतधानिह कश्चन ।
त्यक्तागारः सनिर्विण्णस्तिष्ठेत मुनिवत्तथा ॥ १०२ ॥
भागोपाङ्गमयाचारं सर्वो जैन समाजनः ।
कदाचिदुन्मना न स्याद्यत्कं पार्श्वजिनामिह ॥ १०३ ॥
किन्तु हुण्डावसर्पिण्यां कालदोषादिह क्वचित् ।
प्रादुर्भवति पाखण्डास्तथापि च नृपसतिः ॥ १०४ ॥
गतायामवसर्पिण्यामुत्सर्पिण्यां तथैव च ।
असंख्यकोटिवारे स्यादेका हुण्डावसर्पिणी ॥ १०५ ॥
अवश्य भाविनी सेयं भूत्वा चापि गता पुरा ।
अनवानवदृश्चापि वत्सरे सम्मासवत् ॥ १०६ ॥
तदा भवत्यनर्थानां प्रादुर्भावो बलादिह ।
सीमान कालचक्रस्य भर्तुं शक्यो न कश्चन ॥ १०७ ॥
यथा स्वयं स्वभावाद्धि वर्धन्ते सरिदम्बव ।
तथा कालपरिभ्रान्त्या द्रव्याणां च व्यवस्थितिः ॥ १०८ ॥
तथया तत्र हुण्डावसर्पिण्यां या यथागमम् ।
तीर्थेशानामुपसर्गो हि महानर्थो महात्मनाम् ॥ १०९ ॥
मानभङ्गश्च चक्रेश जायते भरतपूर्वकः ।
इत्यादि बहवोऽन्यथा सन्ति चाचारगोचराः ॥ ११० ॥
हिंसा प्राणिवधश्चैव दुष्कर्मार्जनकारणम् ।
यागार्थं भवत हिंसा मन्यन्ते दुर्धियो द्विजाः ॥ १११ ॥

एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ।
संति वेदान्तिनः केचिद्ब्रह्माद्वैतप्रवादिनः ॥ ११२ ॥

तन्मतं यथा—

“विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतः पात्
संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव एक एव” ॥१॥

सर्वथानित्यमेवैतत्तत्त्वं केचिज्जगुर्यथा ।
आकाशं च तथात्मादि सर्वथैकान्तवादिनः ॥ ११३ ॥
यत्सत्तत्क्षणिकं सर्वं यथा स्वप्नश्च वारिदः ।
इति बौद्धादयः केचित् क्षणिकैकान्तवादिनः ॥ ११४ ॥
पंचभूतात्मकं तत्त्वं जीवो नास्तीह कश्चन ।
ततो बंधो न मोक्षोऽस्ति यतः कापालिका इति ॥ ११५ ॥
ज्ञानानां यदि धर्माणां संतानोच्छेदनात्मकः ।
मोक्षो वाच्यः स जीवस्य मन्यते दुर्धियः पर ॥ ११६ ॥
इत्यादि बहवो प्रोक्तास्तेषामंतर्भिदात्मकाः ।
ते च हुंडावसर्पिण्यां जायंते नान्यदा क्वचित् ॥ ११७ ॥
स्याद्वादगर्भिणी जीयाज्जैनी सिद्धान्तपद्धतिः ।
ययैव सप्रसारेण खंडिताः कुमतादयः ॥ ११८ ॥
निग्रहस्थानमेतेषां पुरस्ताद्दर्शयते कविः ।
मुख्यो विपश्चितो वाच्यस्तत्र दिग्मात्रतोऽपरः ॥ ११९ ॥

१ सर्वं वै खल्विदं ब्रह्म नेह नानास्ति किंचन ।
आरामं तस्य पश्यन्ति न तत् पश्यति कश्चन ॥
इति छान्दोग्य-उपनिषदि ३-१४।

२ शुक्लयजुर्वेदसंहितायां १७-१९।

अपि चैषां कुलिंगानि नानारूपाणि सर्वशः ।
त्रिशूलादिमयशस्त्रैर्विकृतानि भवन्त्यहो ॥ १२० ॥
एकदंडी द्विदंडी च त्रिदंडी चापि कश्चन ।
हंसः परमहंसोऽपि महारण्ये पशूपमाः ॥ १२१ ॥
इतिप्रभृति यावन्ति कुलिंगानि कुलिंगिनाम् ।
नाममात्रतया तानि समा भवन्तु न कश्चन ॥ १२२ ॥
अलं वर्णनया चास्य यत्र पापा समस्ततः ।
हन्यन्ते यवना भूपाः साधवो व्याधिपीडिताः ॥ १२३ ॥
इदमत्र समाकूतं विज्ञेयं परमार्थिभिः ।
जैना धर्मं क्षणं यावद्विस्मार्यो न महात्मभिः ॥ १२४ ॥
यथाप्याताऽपि सौवर्ण्यं जात्यजांबूनद स्वतः
न जहाति तथा साधुः क्षुद्रैः क्षुण्णोऽपि धर्मवत् (त्वम्) ॥१२५॥

१ ते च त्रिदण्ड एव भगवन्नामधेयानुचिन्त्यमिषीक्ते कुटीचर–बहूदक–हंस–परमहंसभेदात् । तत्र त्रिदण्डी शिखी यज्ञसूत्री गृहत्यागी यजमानपरिग्रही सकृत्पुत्रगृहेऽश्नन् कुट्यां निवसन् कुटीचर उच्यते । कुटीचरतुल्यवेषो विप्रगेहे नैराश्यभिक्षाशनो विष्णुजापरतो नदीतीरवासी बहूदकः कथ्यते । ब्रह्मसूत्रशिखाभ्यां रहितः कषायाम्बरदण्डधारी ग्रामे चैकरात्रं नगरे च त्रिरात्रं निवसन् विधूमेषु विगताग्निषु विप्रगेहेषु भिक्षां भुञ्जानस्तपःशोषितकलेवरो देशेषु भ्रमन् हंस उच्यते । हंस एवोत्पन्नतत्त्वज्ञानश्चातुर्वर्ण्यभिक्षाभोजी स्वेच्छया दण्डधारी ईशानीं दिशं गच्छन् शक्तिहीनतायामनशनग्राही वेदान्तैकध्यायी परमहंसः समाख्यायते । एषु चतुर्षु च परः परोऽधिकः । एते च चत्वारोऽपि [illegible] धर्मार्थकेवलिनामपेक्षया गुणैः [illegible] यथा [illegible] तथा [illegible] ।

गुणरत्नसूरिकृतायां हरिभद्रसूरिषड्दर्शनसमुच्चयटीकायां पृ. ११५ ।

उक्तं च—

"एष लोक बहुमानभावित स्यान्निर्जित विविधेन कर्मणा ।
पश्यतस्तद्विकृतीभवात्मन क्षोभमति हृदयं न योगिनः" ॥१॥

इति व्यावर्णितः सोऽपि नृपः कार्ये महानिह ।
शेषा विधिस्तु सर्वोऽपि विज्ञेयः परमागमात् ॥ १२६ ॥
यदा चतुर्थकालस्य शेषमासाऽवतिष्ठते ।
तत्र स्यात्तीर्थनाथस्य यथा वीरस्य निर्वृतिः ॥ १२७ ॥
तत्र केवलबोधस्य भानूद्गतिस्तथैव हि ।
यथात्र वर्द्धमानस्य पश्चान्मोक्षं गतात्परः ॥ १२८ ॥
सधर्मा च सुधर्मा च जम्बूनामोऽन्त्यकेवली ।
यावद्द्वाषष्टि वर्षं स्याद्भगवन्निर्वृतं परम् ॥ १२९ ॥
ततो यथाक्रमं विष्णुर्नन्दिमित्रोऽपराजितः ।
गोवर्द्धनो भद्रबाहुरित्याख्याता महाधियः ॥ १३० ॥
चतुर्दशमहाविद्यास्थानानां पारगा इमे ।
कालस्थमाणमेतेषां कार्त्स्न्येन शरदां शतम् ॥ १३१ ॥
विशाखप्रोष्ठिलाचार्यौ क्षत्रियो जयसाह्वयः ।
नागसेनश्च सिद्धार्थो धृतिषेणस्तथैव च ॥ १३२ ॥
विजयो बुद्धिमान्गङ्गदेवो धर्मादिसम्मतः ।
सेनश्च दशपूर्वाणां धारकाः स्युर्यथाक्रमम् ॥ १३३ ॥
अशीतं शतमष्टाभ्यां तेषां कालसंग्रहः ।
ततोऽप्यात्माश्रितध्यानां पूर्वोपरश्च एव हि ॥ १३४ ॥

१ केवल्यागतकेवलज्ञानं जम्बूस्वामिनः पश्चात् [illegible] इति [illegible] । २ [illegible] ।

ततो नक्षत्रनामा च जयपालो (लो) महातपाः ।
पांडुश्च ध्रुवसेनश्च कंसाचार्य इति क्रमात् ॥ १२५ ॥
एकादशांगविद्यानां पारगाः स्युर्मुनीश्वराः ।
विंशद्विशतमब्दानामेतेषां कालसंग्रहः ॥ १२६ ॥
तदा तत्त्वोपदेशस्य मार्गोऽयं हीनिरिष्यति ।
करस्यनीरवन्न्यायात्साक्षं विश्वविशारदैः ॥ १२७ ॥
सुभद्रश्च यशोभद्रो भद्रबाहुर्महायशाः ।
लोहार्यश्चेत्यमी ज्ञेयाः प्रथमांगाब्धिपारगाः ॥ १३८ ॥
समानां शतमर्धं स्यात्कालोऽष्टादशभिर्युतः ।
तदा तत्त्वार्थस्य मार्गक्षिनावशिष्यत ॥ १२९ ॥
ततोऽपि हीयमानोऽसौ श्रेयमार्गोऽवतिष्ठते ।
दोषात्पंचमकालस्य हीयते बुद्ध्या नृणाम् ॥ १४० ॥
तत्र दुःषमकालेऽस्मिन् प्रमाणं जिनदेशितम् ।
शुद्धवर्षसहस्राणामेकविंशतिसंख्यया ॥ १४१ ॥
ततः श्रेण्यारम्भः स्यान्मनःपर्ययबोधयोः ।
देशावधिं विना परमसर्वावधिबोधयोः ॥ १४२ ॥
ऋद्धीनां चापि सर्वासामभावस्तपसः सतः ।
नापि देवागमस्तत्र कल्याणानामभावतः ॥ १४३ ॥
कदाचित्क्वचित्कस्मिश्चिद्देवाः कथंचन ।
आगच्छन्ति पुनस्तत्र सन्ति मोक्षे जिनागमे ॥ १४४ ॥
समास्तत्र मनुष्याणामायुर्वर्षशतं मतम् ।
विंशत्यापि कमेयद धनुरर्कं वपुः स्मृतम् ॥ १४५ ॥

१ नावात् ।

कल्पाद्यायुःशरीराणां हानिः स्याच्च प्रतिक्षणम् ।
धर्मस्यापि च कस्मिंश्चिद्विपरीते सत्त्वं च श्रेयसः ॥ १४६ ॥
तत्राप्यस्ति निराबाधं सम्यक्त्वद्वयमादितः ।
क्षायिकं च भवेत्तत्र यत्र केवलिनो जिनाः ॥ १४७ ॥
उक्तं च—
"पढमं पढमे णियदं पढमं विदियं च सव्वकालेसु
खाइयसम्मत्तो पुण जत्थ जिणा केवली तम्हि" ॥ १ ॥
महाव्रतानि सन्त्यस्मिन् देशतोऽणुव्रतानि च ।
दुर्लभानीह केषांचिद्गुणस्थानसप्तकम् ॥ १४८ ॥
किं चापि भद्रका[१] केचिद्दयादानादितत्पराः ।
शीलोपवाससंपूर्णा[२] स्वर्गं गच्छन्त्यनारतम् ॥ १४९ ॥
इत्यादीनि च कार्याणि सिध्यन्ति यत्र योगिनाम् ।
आसीत्प्रदेशे च सोऽयं कालो दुःषमसंज्ञकः ॥ १५० ॥
पर्यन्ते चास्य यत्किंचिद् वृत्तान्तं तदिहोच्यते ।
लेशतोऽप्यल्पबुद्धीनां बुद्धिसंवर्धनक्षमम् ॥ १५१ ॥
यापिनि दुःषमकालेऽस्मिन् क्षीणमेष्यति चापरे ।
षष्ठे दुःषमदुःषाख्ये वक्ष्यमाणक्रमस्त्वयम् ॥ १५२ ॥
कल्किस्सर्वविरुद्धे देशे भूपोऽपि धर्मदः ।
स्यात्कल्कीति विख्यातो हासाङ्कपिपीपमः ॥ १५३ ॥

१ प्रथमं प्रथमे नियतं प्रथमं द्वितीयं च सर्वकालेषु ।
क्षायिकसम्यक्त्वं पुन यत्र जिनाः केवली तस्मिन् ॥
इयं गाथा क्षपितेतिप्रमाणमपि पाठे नेति क्रमेण उद्धृता ।
२ निरंतरं ।

तस्य क्रिया समस्तास्ताः प्रजापीडाकरा स्मृताः ।
तासामुद्देशमात्रेऽपि न क्षमो ब्रोऽपि क वयम् ॥ १५४ ॥
तावता धावकः सर्वे विलीयते क्षय यथा ।
लोकधर्ममयः सर्वैः स्यात्कृपा विक्रियाऽथवा ॥ १५५ ॥
धर्मबंधनमेर्न च धर्मो जल्पति दुष्टधी ।
मन्ये प्राणिविनाशाय केवलं कालनोदितः ॥ १५६ ॥
अथ तत्रापि नृपः साक्षादम्युच्छिन्नमधावृतः ।
यस्मादेको मुनिर्जैनो विद्यते भावलिंगवान् ॥ १५७ ॥
एका चाप्यार्यिका तत्र यथाक्रमव्रतधारिका ।
सम्मोनिः श्रावकश्चैको जैनधर्मपरायण ॥ १५८ ॥
अथान्यधुः कल्पकारमा ध्यायन्त्येवं स पापधीः ।
न कोऽप्यत्र मदाज्ञाया परो नास्ति कराहत ॥ १५९ ॥
एवं श्रुत्वाधमाः केचिज्जगुर्निष्ठुरया गिरा ।
मुनिमुद्दिश्य दत्वाऽस्य स्यादृक् करधर्षितः ॥ १६० ॥
उक्तं च—
"राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः ।
लोकास्तदनुवर्तंते यथा राजा तथा प्रजाः ।" ॥१६१॥
इत्याकर्ण्य स पापात्मा पापः प्रावाच निन्द्याम् ।
यथाकर्णचिद्र्यं दैत्य स्यापयाय विधीयताम् ॥ १६२ ॥

१ मार्गपतितः । २ श्रीकोल्ये नोमदेवरगणपर्तितस्तबमूपपभेऽप्रि उर्क चैति श्लोक उक्तोऽस्ति ।

ततो भूपाज्ञया कर्षिर्भल्ल पञ्चा मुनस्तदा ।
यद्यापपसंशुद्धया भिक्षायमगति स्म सः ॥ १६३ ॥
क्रमात्साप्ता विशुद्धात्मा तथापासक्तसद्मनि ॥
स्वामिप्रमाऽस्तु तिष्ठात्र भावकनापि सत्कृतः ॥ १६४ ॥
यथाम्नायं विधानज्ञा प्रसारितकरद्वय ।
मास्तुकाम स माभ्यस्य ग्रास जग्राह शुद्धधीः ॥ १६५ ॥
यावद्भक्तं स वाक्षद्ध धारिता भूपकिङ्करैः ।
मा मा भुङ्क्ष्वेति दुष्कर्म्यैरभ्यागातापर्वतरिव ॥ १६६ ॥
अयं च प्रथमा ग्रासो मागपयाचितस्त्वया ।
द्विपः प्रतिदिनं सावधानाद्ग्रासाऽभिर्ग्रसनम् ॥ १६७ ॥
तत्क्रमाभ दुराचारैर्मुनिरागमकाविदैः ।
सर्व विज्ञापयामास कालावस्थांतराद्विकम् ॥ १६८ ॥
भूनमवत्समापत्तं दृष्टकास्तानर्थंधिवम् ।
मन्यमानधर्मप्रविविरिव पापक्रिया कथम् ॥ १६९ ॥
इति निश्चित्य धर्मात्मा मीवनाशापरिस्पृहः ।
त्यक्त्वा पाणिपुटाहारं सावधाना भवन्मुनि ॥ १७० ॥
यावज्जीवं चतुर्धापि मनावाक्काययोगतः ।
त्यक्त्वा (क्त) माहारकं सर्व मुनिना भवभीरुणा ॥ १७१ ॥
ततोऽप्यार्यिकया मासाद्भुक्त साधादिकं स्वतः ।
सल्लेखनाविधा विधं सावधानतया धृतम् ॥ १७२ ॥
सद्दीप भावकश्चापि चक्र सल्लेखनाविधिम् ।
मुनिमन्त्रसमागम्या विरक्त स्वशरीरकः ॥ १७३ ॥

वर्द्धते यस्तपोऽवश्यं भावी कालस्वभावतः ।
वर्षति सप्तसप्ताहं कारीपाम्भ्यादयः क्रमात् ॥ १८५ ॥
इत्यमेकोनपञ्चाशद्दिनं यावदुपद्रवः ।
महादुःखाकरो भीमो रूक्षकर्मात्मको भवेत् ॥ १८६ ॥
ह्रासप्राप्तिमीयानां दंपतीमिथुनं तदा ।
तत्राधिकारिभिर्देवैर्नीयते गह्वरादिषु ॥ १८७ ॥
क्षेत्रमार्यखंडेऽस्मिन् कुभिमं भस्मसात्क्षपेत् ।
अकुभिमं तु केनापि कर्तुं शक्यं न चान्यथा ॥ १८८ ॥
ततश्चिमावनिर्नित्या क्षेत्रमाभारतद्वये ।
भूतपूर्वो नयः सोऽयमित्थमित्थमनन्तशः ॥ १८९ ॥
एवं षट् समया यत्र वर्तते पारिणामिका ।
अनुलोमैर्विलोमैश्च तत्क्षेत्रं भरताह्वयम् ॥ १९० ॥
तत्रापि(स्ति) मगधो देशो विख्यातो भुवि सारवत् ।
नित्यप्रमुदिता यत्र प्रजा भोगैः कृतोत्सवाः ॥ १९१ ॥
बलाकालीपताकाढ्या स्तनिता यत्र गुंजिता ।
जीमूता यत्र वर्षन्तो भांति मत्ता इव द्विपाः ॥ १९२ ॥
न स्पृशंति कराबाधां यत्र राजन्वतीः प्रजाः ।
सदा सुकालसंनिष्पाभेतयो नाप्यनीतय ॥ १९३ ॥
यस्य सीमाविभागेषु धान्यादिक्षेत्रसंपद ।
सदैवफलसंशालिन्या भांति धर्म्या इव क्रियाः ॥ १९४ ॥
यत्र शालिवनोपांते खात्पतंती शुकावली ।
शालिगोप्योऽनुमन्यंते दधती तोरणश्रियम् ॥ १९५ ॥

१ गर्जना । २ मेघाः । ३ गोपाङ्गनाः ।

मुद्गमाषयवा धृताः शालिममा' फलानताः ।
कृतसंराविणो यत्र छोत्कुर्वतीव पक्षिणः ॥ १९६ ॥
यत्र पुंड्रेक्षुवाटेषु यत्र चीत्कारहारिषु ।
पिबंति पथिकाः स्वैरं रसं सुरसमैक्षवम् ॥ १९७ ॥
यत्र कूपतडागाद्याः काम सति जलाशयाः ।
तथापि जनतातापं हरंति रसवत्तया ॥ १९८ ॥
जनतापच्छिदो यत्र वाप्यः स्वच्छांबुसंभृताः ।
भांति तीरतरुच्छाया निरुद्धोष्णा वसुमया ॥ १९९ ॥
विपंका प्रावृषेऽप्यत्र स्वच्छा' स्फटिकसन्निभ ।
अलंघ्याः सर्वभोग्याश्च विविधा यत्र निम्नगाः ॥ २०० ॥
सरसां तीरेषु दर्पेषु रुतं हंसा विकुर्वते ।
यत्र कंठविलासमृणालशकलाकुला' ॥ २०१ ॥
वनेषु वनमातंगा मदामीलितलोचनाः ।
भ्रमंत्यविरतं यस्मिन्माद्यद्रुमिव दिग्गजान् ॥ २०२ ॥
यत्र भृंगाग्रसक्तमकर्दमा दुर्दमा सृक्षम् ।
वत्सनंति वृषा दृष्ट्वा स्थलेषु स्थलपद्मिनीम् ॥ २०३ ॥
स्वर्गावाससमा' पुर्यो निगमाः कुरुसंनिभाः ।
विमानस्पर्द्धिनो गेहाः प्रजा यत्र सुरोपमाः ॥ २०४ ॥
यत्र भंगस्तरंगेषु गमेषु मदविक्रिया ।
वैदपारुष्यमम्भःसु सरःसु जलसंग्रह ॥ २०५ ॥
गवां गणा यथाकालमासृगमाः कृतस्वना ।
पोपर्यंति पयोभि' स्वैर्मेन यत्र घनै' समाः ॥ २०६ ॥

१ मण्डका । २ स्पर्धे ।

निसर्गसुभगा नार्यो निसर्गचतुरा नरा ।
निसर्गसम्मितालापा धाम्ना यत्र गृहे गृहे ॥ २०७ ॥
यत्र सत्पात्रदानेषु प्रीतिः पूजासु चार्हताम् ।
भक्तिरात्यंतिकी शीले प्रायश्च रतिर्नृणाम् ॥ २०८ ॥
देशस्यास्यन्तमध्येऽस्ति नाम्ना राजगृहं पुरम् ।
यत्र राजन्यकं स्वच्छमासत त्रिदिवादिव ॥ २०९ ॥
यत्राभ्रंलिहसौधाग्रलग्नस्थः प्रोतकुम्भजे ।
सदा संभाव्यते पारैः सप्तपर्णं नभस्तलम् ॥ २१० ॥
जिनप्रासादशिखरं संरोपितकुम्भकैः ।
किं किमाकाशगंगायाः प्रवाहः शतधा भवत् ॥ २११ ॥
सुखमावापनस्थानां नारीणां मुखपङ्कजैः ।
बद्धपुण्डरीकाणां सरसां श्रियमावहन् ॥ २१२ ॥
यत्सुन्दरीणां सौन्दर्यं वर्ष्मे वर्ष्मं सुरस्त्रिय ।
मत्पुरुषाकिता मन्ये वस्युरुम्मपिनक्षणा ॥ २१३ ॥
यत्र तौर्यत्रिकध्वानैर्धूपधूमविवर्तनैः ।
सदैव दुर्दिनभ्रान्त्या केकां तन्वन्ति केकिनः ॥ २१४ ॥
तत्र राजाधिराजोऽयं राजते श्रेणिकः सुधीः ।
निर्भिन्नाशेषभूपालमौल्यर्पितपदद्वयः ॥ २१५ ॥
सर्वथाऽस्य गुणस्थानानि नालं वर्णयितुं कविः ।
तस्मादिङ्मात्रमत्रापि लक्ष्यं सामुद्रिकं यथा ॥ २१६ ॥

१ नभसीव धनरूपे इत्यर्थः । २ पताकाभिः । ३ तौर्यत्रिकं नृत्यगीतवाद्यं मानपर्यन्तं भवम् इत्यर्थः । मेघभ्रान्त्या । ५ केका वाणी मयूरस्य ।

शिरस्यस्य बभुर्नीला मूर्द्धजा कुञ्चितायताः ।
कामकृष्णभुजगस्य शिशवो नु विजृंभिता ॥ २१७ ॥
नेत्रभृंगे मुखाब्जे सस्मितांशूत्करकेसरे ।
दधे स्म मधुरां वाणीं मकरंदरसोपमाम् ॥ २१८ ॥
नभपार्द्वितयं रेजे ससक्तं तस्य कर्णयो ।
शुश्रुती ताविवाश्रित्य शिक्षितुं तत्प्रदर्शिताम् ॥ २१९ ॥
उपकंठमसौ दध्रे हारं नीहारसच्छविम् ।
तारानिकरमास्येन्दोरिव सवायमागतम् ॥ २२० ॥
वक्षःस्थलेन पृथुना सोऽभात्स्वंद्रनचर्चिताम् ।
मेरोर्नितम्बलक्ष्मीं शारदीमिव चन्द्रिकाम् ॥ २२१ ॥
स्कन्धोल्लासिनौ मल्लमन्यस्य शिरसान्तिके ।
बाहू तस्यायतौ नीलनिषधाविव रेजतुः ॥ २२२ ॥
सरिदावर्तगंभीरा नाभिमध्येऽस्य निर्बभौ ।
नारीदृक्करिणीरोधे वारिखातेव हृद्भुवो ॥ २२३ ॥
रसनावेष्टितं तस्य कटिमण्डलमाबभौ ।
हेमवेदीपरिक्षिप्तमिव जम्बूद्रुमस्थलम् ॥ २२४ ॥
ऊरुद्वयमभात्तस्य स्म स्थिरं पृथु सुसंहतम् ।
रामामनोगजालानस्तंभलक्ष्मीं समुद्वहन् ॥ २२५ ॥
चरणद्वितयं सोऽभादारक्तं म्रदिमान्वितम् ।
श्रितं श्रियानपायिन्या सपारीव स्थलाम्बुजम् ॥ २२६ ॥

१ मकरंदः पुष्परस इत्यमरः । २ मेघनुस्यस्य । ३ कामेन । ४ सिंचितं ।
५ कन्दनावारस्तंभः ।

रूपसंपत्प्रसुर्म्यया भूषिता भूतसंपदा ।
शरच्चन्द्रिकयेवेन्दोर्मूर्तिरानन्दिनी दृशाम् ॥ २२७ ॥
पद्मानन्यप्रमाणेषु परं मानोण्यमागता ।
यस्य धीः सर्वभावेषु दीपकस्य व्यदीप्यत ॥ २२८ ॥
सकलः सकलो विद्वान् विनीतात्मा मितेन्द्रियः ।
राज्यलक्ष्मीकटाक्षाणां लक्ष्यतामगमत्कृती ॥ २२९ ॥
अनुराग सरस्वत्यां कीर्त्यां प्रणयनिर्भयाम् ॥
लक्ष्म्यां चालम्यमातन्वन्विदुषां मूर्ध्नि सोऽभवत् ॥ २३० ॥
यस्य व्यसनमवाप्नो सद्म्यरिपवः क्षणात् ।
मवप्रभसमासास्सर्वे दवपत्री तृणा इव ॥ २३१ ॥
यस्य पादद्वयं स्मनत्मणमेति महीश्वराः ।
यशोगंधरिपाकृष्टो भ्रमरा इव कुन्देयम् ॥ २३२ ॥
सोऽप्यमज्ञानतः पूर्वं मुनमाप्युपसर्गतः ।
तीव्रसंक्लेशभावेन भद्रापुनरकस्य च ॥ २३३ ॥
पश्चात्तापैर्विशुद्धः सन् कालसम्प्रिमसावतः ।
सम्यक्त्वसेनः सोऽप्यमासीत्कर्मोदकस्थुधीः ॥ २३४ ॥
तपयाद्यतर्कं यस्य विशेषं तत्कथानकात् ।
अत्र संक्षिप्यमस्याभार्क निस्तरता मया ॥ २३५ ॥
तस्य पत्नी तु भामाऽऽसीत्सन्तति पतिव्रता ।
भवधीसम्प्रषमोक्त्या सम्यक्त्वनवासिनी ॥ २३६ ॥
संस्पंत[1] पुरवासिन्यग्रमिया भवसरसाः ।
कलमर्पतपारमाने यथेव मनुते स्म सा ॥ २३७ ॥

---

१ इति पाठे इति क्वचित् पाठः ।

रूपयौवनलावण्यगुणवारितरंगिणी ।
साभूत्सरिदिवांभोधेर्भर्तुश्छन्दानुगामिनी ॥ २३८ ॥
भजस्रं तत्समीपं सा बिभर्ति स्म स्मरातुरा ।
यद्वासीत्कल्पवल्लीव ससक्ता रतकर्मणि ॥ २३९ ॥
अथान्येद्युर्महास्थानमासीनं हरिविष्टरे ।
नमत्कोटिकिरीटाग्रैर्नृपैरासेवितं भृशम् ॥ २४० ॥
निर्झरक्षीरसंकाशचलच्चामरराजिभिः ।
वीज्यमानं सभामध्ये गिरीन्द्रमिव निश्चलम् ॥ २४१ ॥
इंदुबिम्बसमाकारसितच्छत्रोपलक्षितम् ।
श्रेणिकं तं महाराजं ददर्श वनपालकः ॥ २४२ ॥
तं स्तूय प्रणम्यादावुवाच विनयान्वितः ।
देवाश्चर्यपदं किंचिद् दृष्टं मन्यसतो मया ॥ २४३ ॥
तत्सर्वं सेवकोऽपीह वक्तुं क्षमता न कश्चन ।
तथाप्युद्दिश्यताऽश्चर्यं वाच्य वच्मि नराधिप ॥ २४४ ॥
श्रीवर्द्धमाननाथस्य महतस्त्रिजगद्गुरा ।
समवसृतिरस्यासीद्विपुलाचलमस्तके ॥ २४५ ॥
वर्णयामि किमत्राहं यामातिशयशालिनी ।
यत्र संभूय नाकस्था[1] किंकरा इव कल्पगा[2] ॥ २४६ ॥
तत्र मधुभिर्वामीपर्वैराख्यानानुकारिणी ।
घंटा प्रसरयामास जगत्कल्पामरसद्मनाम् ॥ २४७ ॥
ज्योतिर्लोके महान् सिंहनादाऽभूत्समुत्थित ।
येनाशु निर्मदीभावमवाप सुरवारण ॥ २४८ ॥

१ मिलत्वने । २ देवा ।

दध्वान ध्वनदध्मातृध्मानितानि तिरोदधन् ।
वैयतरपु गेहपु महानानकनिःस्वनः ॥ २४९ ॥
संस्तः संसरत्तैः (?) सार्धं यूयमथ निघ्नसथः ।
इतीव धापय न्नुच्चैः फणीन्द्रभवनं ध्वनन् ॥ २५० ॥
चिघ्नरान्यमरस्थानामासनं प्रचकम्पिरे ।
असमापीव तद्दृर्वं सार्धुं जिनजयोत्सव ॥ २५१ ॥
पुष्पांजलिमिवातनुः समंतात्सुरभूरुहः ।
पचश्चासाकरैर्दीप्तिर्भिगसस्कुसुमोत्करैः ॥ २५२ ॥
दिवः मसाधिमासस्त्रुम्पत्राजे ध्वमभवरम् ।
विरजीकृतभूलाक' शिशिरो मरुदाववौ ॥ २५३ ॥
इति प्रमादमातन्वमकस्मात्भुवनोदरे ।
कलशज्ञानपूर्णेन्दुर्जगदम्बिममपीपषन् ॥ २५४ ॥
तमैरावणमारूढः साक्षात्तास्ताऽभ्युपचराम् ।
पद्माकर इवात्फुल्लपंकजी गिरिमस्तक ॥ २५५ ॥
द्वात्रिंशद्वदनान्यस्य प्रत्यास्यं च रदाष्टकम् ।
सर प्रति रदं तस्मिन्नब्जिन्यका सरः प्रति ॥ २५६ ॥
द्वात्रिंशत्पसमास्तस्यास्तावत्मपितपत्रिकाः ।
तत्पत्रेषु दैवानां नचमम्तत्समा' पृथक् ॥ २५७ ॥
नृत्यंति सलपल्लवनमारभ्या सस्मितभ्रूभ ।
पश्यचित्तद्रुमपुष्पैर्नन्त्यंतः (?) प्रमर्त्यांकुरान् ॥ २५८ ॥
तासां सहासभ्रुंगाररसभावसयान्वितम् ।
पश्यंतः कौतुकीभावं मस्य पिपासिरे सुराः ॥ २५९ ॥

१ नगहज । २ देहयमतहसितम । ३ सुलोपं प्रासप्र. ।

प्रयाण सुरराजस्य ननृतुरप्सरस पुर ।
रक्तकंठाश्च किंनर्यो जगुर्जिनपतेर्जयम् ॥ २६० ॥
ततो द्वार्भिर्यदिंग्राणां पृतेना यद्गुरुकृतनाः ।
प्रसन्नुर्विलसच्छत्रचामरा प्रणतामराः ॥ २६१ ॥
अप्सर'कुङ्कुमारक्तकुचचक्राह्वयुग्मकं ।
हृद्यम्बपङ्कजच्छन्न लसन्नयनोत्पलं ॥ २६२ ॥
नभःसरसि हाराशुस्वच्छवारिणि हारिणि ।
चलन्त्यामरास्तत्र हसायन्त स्म नाकिनाम् ॥ २६३ ॥
इन्द्रनीलमयाहार्यकरश्मिभि' क्वचिन्नाततम् ।
श्यामाभांति बिभरामास चोवासिनिमम्बरम् (?) ॥ २६४ ॥
पद्मरागरुचा व्याप्तं क्वचिद्व्योमतलं बभौ ।
सांध्यरागमिवाश्रावन्तर्जुरंजितदिङ्मुखम् ॥ २६५ ॥
क्वचिन्मरकतच्छायासमाक्रांतमभोऽम्बरः ।
सशैवलमिवाम्भोधर्मलपर्यंतसास्पिपम् ॥ २६६ ॥
तन्व्यः सुरु विराकारा लसद्रत्नमूषणाः ।
तत्रामरस्त्रियो रजुः कल्पवल्ल्य इवांबर ॥ २६७ ॥
तासां स्मराणि वक्त्राणि पद्मबुद्ध्यानुधावताम् ।
रेजे मधुलिहां माला मन्तुर्ग्येव मनोभुवः ॥ २६८ ॥
सुरानकमहाध्वानैः पूजावेलापरां दधन् ।
नभश्छोलोल्लासकल्लोलो बभौ देवागमांबुधि ॥ २६९ ॥
तत्र दिव्यांगनासंपर्कवितस्त्वाद्रिपाहनैः ।
उत्थापवैनमायस्य भेजे विषपन्थियम् ॥ २७० ॥

१ सेना । २ हसाऽन्त्य । ३ हास्यपुष्पाणि । ४ इव' अथ ।

यत्र दर्दुरका नागफणायां च कृतासनाः ।
आश्रयंतीह छायायै पांथाः सान्द्रद्रुमेष्विव ॥ ३०२ ॥
द्रुमाः सर्वेऽपि सर्वर्तुफलश्री दलशालिनः ।
आनंदादिव नृत्यंति चलच्छाखाकरायताः ॥ ३०३ ॥
व्रीहयः फलसंपन्नाः स्वादुपकाश्च सांप्रतम् ।
विराजंते सर्वभूपृष्ठे सुकृतानामिवांकुराः ॥ ३०४ ॥
सर्वौषध्यो महावीर्याः सर्व्वामयविनाशकाः ।
दीप्यंतेऽतितरामद्य प्रजानां सुखहेतवे ॥ ३०५ ॥
दुर्भिक्षादीतयो नाशं यांति मूलादपि क्षणात् ।
पुण्यसूर्योदयादेव तमो नैशं यथा विभो ॥ ३०६ ॥
इत्याद्यतिशयाः सर्वे संति युगपज्जिनेशिनः ।
तांस्तावद्वक्तुं नर्क्तुं नाहं शक्नोमि सांप्रतं ॥ ३०७ ॥
इति श्रुत्वा वचो भूपो वनपालमुखादिह ।
आनंदामृतसंसिक्तदेहोऽभूद्भक्तिनिर्भरः ॥ ३०८ ॥
अथोत्थाय नृपस्तूर्णमासनात्संमुखं विभोः ।
गत्वा सप्तपदं यावत्त्रिधा चक्रे नमस्क्रियाम् ॥ ३०९ ॥
सानुजन्मासमवोन्तःपुरपौरपुरागमैः ।
भाव्याभिर्भ्यां पुरोधाय ससभ्याऽभूत्प्र भक्ति ॥ ३१० ॥
गुरौर्भक्तिं परां सन्वन्कुर्वन्धर्ममभासनाम् ।
स भूत्वा परयोत्कस्थे मगधर्द्धदनाधिपो ॥ ३११ ॥
अथ सेनांबुधेः क्षोभमातन्वन्नध्वनिःस्वनः ।
आनंदपटहो भेर्व दध्वान ध्वनयन् दिशः ॥ ३१२ ॥

सुरेन्द्रैरावयालोक्य विभीरास्थानमंडलम् ।
सुरशिल्पिभिरारब्धपरार्द्धरचनाञ्चितम् (?) ॥ २७१ ॥
एकयोजनविस्तारमभूदास्थानमीशितुः ।
हरिनीलमहारत्नघटितं विलसत्तलम् ॥ २७२ ॥
सुरेन्द्रनीलनिर्माणं समवृत्तं तदा बभौ ।
त्रिजगच्छ्रीमुखालोकमंगलादर्शविभ्रमम् ॥ २७३ ॥
संस्थानमप्यमस्यास्य संस्थानं को नु वर्णयेत् ।
सुत्रामा धनपालोऽपि निर्माणे यस्य कर्मठः ॥ २७४ ॥
तथाप्यनूद्यते किंचिदस्य शोभासमुच्चयः ।
श्रुतेन येन सम्प्रीतिं भेजे भव्यात्मनां मनः ॥ २७५ ॥
पंचवर्णमयोद्भासिरत्नपांशुभिराचितः ।
तस्य पर्यंतभूभागे धूलीशालः परिष्कृतः ॥ २७६ ॥
चतसृष्वपि दिक्ष्वस्य हेमस्तंभाग्रलंबिताः ।
तोरणानां करस्पर्शिरत्नमाला विरेजिरे ॥ २७७ ॥
ततोऽन्तरान्तरं किंचिद्गत्वा हाटकनिर्मिताः ।
रेजे मध्येषु वीथीनां मानस्तंभाः समुच्छ्रिताः ॥ २७८ ॥
अधिष्ठिता विरेजुस्ते मानस्तंभा मनोहराः ।
ये दूरादीक्षिता मानं स्तंभयंत्याशु दुर्दृशाम् ॥ २७९ ॥
उक्तं च—
" मानस्तंभाः सरांसि प्रविमलजलसत्खातिका पुष्पवाटी ।
प्राकारो नाट्यशाला द्वितयमुपवनं वेदिकान्तर्ध्वजाद्याः ।

१ समवसरणम् । २ स्तम्भाः ।

सालः कल्पद्रुमाणां सुपरिवृतवनं स्तूपहर्म्यावली च ।
प्राकारः स्फाटिकोऽन्तर्नृसुरमुनिसभा पीठिकाग्रे स्वयंभूः" ॥२८०
तत्र त्रिमेखलस्यास्य मूर्ध्नि पीठस्य विस्तृतौ ।
स्फुरन्मणिशिखाजालसरचितामरकार्मुके ॥ २८१ ॥
चलच्चामरसंघातप्रतिबिम्बनिपातने[१] ।
हंसैरिवासरो बुद्ध्या सेव्यमाने सखे पृथौ ॥ २८२ ॥
मार्तण्डमंडलच्छायामत्स्पर्द्धिनि महर्द्धिके ।
स्वर्धुनीफेननीकाशे[२] स्फटिकैर्घटिते क्वचित् ॥ २८३ ॥
शुचौ स्निग्धे मृदुस्पर्शे जिनांघ्रिस्पर्शपावने ।
पर्यंतरचितानेकमंगलद्रव्यसंपदि[३] ॥ २८४ ॥
त्रिमेखलांकिते पीठे सैषा गंधकुटी बभौ ।
यत्र त्रैलोक्यनाथस्य सत्या सर्वार्थदायिनी ॥ २८५ ॥
यथा सर्वार्थसिद्धिर्वा स्थिता त्रिदिवमूर्धनि ।
तथा गंधकुटी शोभा पीठस्याधितले बभौ ॥ २८६ ॥
सुगंधधूपनिःश्वासा सुमनोमालभारिणी ।
नानाभरणदीप्तांगी या वधूरिव दिद्युते ॥ २८७ ॥
तस्या मध्ये हैमं पीठं नानारत्नप्रभाकीर्णम् ।
मेरोः शृंगं न्यक्कुर्वाणं चक्रे शक्रादेशाद्धनदः ॥ २८८ ॥
विष्टरं तदलंचक्रे भगवानंतिमतीर्थकृत् ।
चतुर्भिरंगुलैः स्वेन महिम्ना पृष्टतलम् ॥ २८९ ॥
तमासीनं समिंद्राद्याः परिचर्यामहेज्यया ।
पुष्पवृष्टिं प्रवर्षंतो नभोमार्गे घना इव ॥ २९० ॥

१ स्वर्गंगेव । २ जिनस्पर्शेन । ३ चमर ।

तमालाङ्कुरवरु रज पर्यंत मिजगन्धर्व ।
रुंधन्मार्गं दिवसोनां धुन्वन् मारुता स चापुषि २९१ ॥
छत्रं चचमं रुचिमत्वास्या चांऽऽमिमयदुपिरां मरुर्मीम् ।
यथा स्कन्धे वज्रभृन्मूर्ने सेवां विदधज्जगतां प्रभु ॥ २९२ ॥
पय पयाधरिव वीचिमाला मर्त्याणस्थानां समिति समंतात् ।
जिनेन्द्रपर्यतनिपक्षियस्त्रः फरास्कंधराधिरमूद्भिपूना ॥ २९३ ॥
जैनी किमंगप्रतिरूस्वपंवती किमिंदूमासां वनितापतंवी ।
इति स्म देवो मनुन पवती सा चामराली वरदिद्युशुभ्रा ॥२९४॥
सुरदुंदुभयो मधुरध्वनया निनदंति तदा स्म नभाम्बिर ।
जलदागमशंकिभिरुन्मदिभि शिखिभिः परवीक्षितपद्धतय २९५
प्रभया परिता जिनदेहभवा जगतां सकल्पा समवायिसृतौ (?) ।
स्वर्थं स चराचरमर्त्यगनाः किमपाहृतमीदृग्नि चारित्र विभो।२९६
दिव्यमऽध्वनिरस्य मुखाम्भोजान्मेघरवानुकृति निरगच्छत् ।
भव्यमनोगततमोऽस्वमाऽम्नभगुरुद्य यथध तमोऽरिः ॥ २९७ ॥
इत्यष्टाभिः मर्वोहारैरन्विता भूजिनक्षिन ।
विपुलाद्रौ स्थिता दैव देवेन्द्रैरपि पिष्ठिता ॥ २९८ ॥
अपि तत्र विरुंधति मिथा वैरं परस्परम् ।
जन्मसंतानसंस्काराबद्धकाया विरोधिनः ॥ २९९ ॥
काचिपरप्रसपर्यायस्त्रभावत्वाद्विरापिनः ।
नापि ते विक्रियां भेजुस्तत्सांनिध्यप्रभावतः ॥ ३ ० ॥
तथया कारिणी दुग्धं वाम्पीत हरिबालकः ।
मातृबुद्ध्या तथा सिंहीमापनंति मृगार्भकाः ॥ ३०१ ॥

१ समीपे । २ सूर्येण । ३ मत्तसमता ।

यत्र दर्दुरका नागफणायां च कृतासनाः ।
आश्रयन्तीह छायायै पांथा सान्द्रद्रुममिव ॥ २०२ ॥
द्रुमाः सर्वेऽपि सर्वर्तुफलनम्रा दलशालिनः ।
आनंदादिव नृत्यन्ति चलच्छाखाकरापताः ॥ २०३ ॥
व्रीहयः फलसंपन्नाः स्वादुपाकाश्च सांप्रतम् ।
विद्यन्ते सर्वभूपृष्ठे सुकृतानामिवांकुराः ॥ २०४ ॥
सर्वौषध्यो महावीर्याः सर्वामयविनाशकाः ।
दीप्यन्तेऽतितरामत्र प्रजानां सुखहेतवे ॥ २०५ ॥
दुर्भिक्षान्नीतयो नाशं यान्ति मूलान्यपि क्षणात् ।
पुण्यसूर्योदयादत्र तमो नैशं यथा विभोः ॥ २०६ ॥
इत्याद्यतिशयाः सर्वे संति युगपज्जिनस्विनः ।
यांस्तानुद्धृत्य वक्तुं नाहं क्षमामि सांप्रति ॥ २०७ ॥
इति श्रुत्वा वचो भूपो वनपालमुखादिह ।
आनंदामृतसंसिक्तदेहोऽभूद्भक्तिनिर्भरः ॥ २०८ ॥
अथोत्थाय नृपस्तूर्णमासनात्सम्मुखं विभोः ।
गत्वा सप्तपदं यावत्त्रिधा चक्रे नमस्क्रियाम् ॥ २०९ ॥
सानुजन्मासमस्तोऽन्तःपुरपौरपुरागमैः ।
आप्याभिख्यां पुरोधाय ससज्जोऽभूद्गमं प्रति ॥ २१० ॥
शरीरैर्भक्तिं परां तन्वन्नुत्पन्नपरमभावनाम् ।
स भूत्वा परयोनस्थे भगवद्वन्दनाविधौ ॥ २११ ॥
अथ सनांगुपैः सोममातन्वन्नभिध्वनिःस्वनः ।
आनंदभम्ही मदं दध्वान ध्वनयन् दिशः ॥ २१२ ॥

प्रस्थितोऽथ महाभागो गजारूढः श्रेणिको नृपः ।
महाहस्त्यश्वपादातिरथकल्पा वृताऽभितः ॥ ११३ ॥
तेन प्रचलिता सेना तदानकपृथुध्वनि[1] ।
वेलेव वारिधेः प्रोद्यद्दर्पभुजवीचिकाः ॥ ११४ ॥
तया परिवृतः प्रापत्स जिनास्थानमण्डपम् ।
प्रसर्पत्तमसा दिक्षु जितमार्तण्डमण्डलम् ॥ ११५ ॥
परीत्य पूजयन्मानस्तंभान्साम्यैः तत परम् ।
खातां लतां वनं शालं वनानां च चतुष्टयम् ॥ ११६ ॥
द्वितीयशालमुल्लंघ्य ध्वजान् कल्पद्रुमावलीम् ।
स्तूपान् प्रासादमालाश्च पश्यन्विस्मयमाप सः ॥ ११७ ॥
ततो द्वारिकैर्देवैः संभ्राम्यद्भिः प्रवेशितः ।
श्रीमण्डपस्य वैदग्धीं साऽप्यपश्यत्स्वर्गजित्वरीम् ॥ ११८ ॥
ततः प्रदक्षिणीकुर्वन् धर्मचक्रचतुष्टयम् ।
स्वर्ण्यां वा पूजयामास प्राप्य प्रथमपीठिकाम् ॥ ११९ ॥
ततो द्वितीयपीठस्थान् विमाराष्टौ महाध्वजान् ।
सोऽर्चयामास संप्रीतः पूतैर्गन्धादिवस्तुभिः ॥ १२० ॥
मध्ये गंधकुट्यां त्रिदिपारार्द्धे हरिविष्टरे ।
उदयाचलमूर्द्धस्थमिवार्कं जिनमैक्षत ॥ १२१ ॥
चलच्चामरसंघातवीज्यमानं महाप्रभुम् ।
प्रपतन्निर्झरं मेरुमिव चामीकरच्छविम् ॥ १२२ ॥
इत्याद्यष्टप्रातिहार्यैर्विभ्राजितं जिनेश्वरम् ।
स त्रिः प्रदक्षिणीकृत्य प्रणनाम जगद्गुरुम् ॥ १२३ ॥

१ तदानक पृथुः इति पाठान्तरम् । २ धूर्ली । ३ शोभां ।

इमाय पापयुक्तानां व्यापा प्राप्येष्टपा मखम् ।
पुनान्ते प्रणिपत्यैवं महानिरितजान्वसौ ॥ ३२४ ॥
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं महात्मन ।
सप्रसूनमालाभिरित्यानर्च गिरांपतिम् ॥ ३२५ ॥
त्वं जिनः कामजिज्ञाता त्वमर्हन्नारिहारक ।
धर्मध्वजी धर्मपति कर्मारातिनिशुम्भन ॥ ३२६ ॥
तव हर्यासनं भाति विश्वभर्तुर्मनस्करम् ।
कृतपत्नैरिवाद्रौद्रं न्यगृह्यं मृगाधिपैः ॥ ३२७ ॥
तवायं प्रसरच्छायस्तुंगाऽशोकमहाद्रिपः ।
स्वच्छायासमिवान्पाति स्वत शिष्यानिवाभितान् ॥ ३२८ ॥
तवामी चामरव्राता यक्षैरुत्क्षिप्य वीजिताः ।
निर्धुनन्तीव निर्व्याजमागो वै सागसां नृणाम् ॥ ३२९ ॥
त्वामामनन्ति परितः सुमनाञ्जलया दिव' ।
तुष्टया स्वर्गलक्ष्म्येव मुक्ता हर्षाश्रुबिन्दवः ॥ ३३० ॥
देवदुंदुभयश्चामी निनदंति नभस्स्थिनाः ।
घोषयंति जयोत्साहं निर्मितासिलकर्मणः ॥ ३३१ ॥
ज्ञानदर्शनवीर्याणि विरतिः शुद्धदर्शनम् ।
दानादिलब्धयश्चेति क्षायिकास्तव शुद्धयः ॥ ३३२ ॥
छत्रत्रितयमाभाति शुभ्रं जिन तावकम् ।
मुक्तालम्बनविभ्राजि लक्ष्म्या' क्रीडास्थलायितम् ॥ ३३३ ॥
तव देहप्रभोत्सर्पैरिदमापूर्यते सद ।
पुण्याभिषेकसंभारं संवयज्ञिरिवाभित' ॥ ३३४ ॥
तव वाक्प्रसरो दिव्य' पुनाति जगतां मन ।
मार्दोपतमसां पुन्सांस्तमज्ञानान्धकारपमः ॥ ३३५ ॥

१ पूजयन्तो । २ सेवम् ।

४

ज्ञानमप्रतिघं विश्वं यथावस्तीच्चनाक्रमात् ।
यथा ज्ञानं तथैवामूत्क्षायिकं तव दर्शनम् ॥ २३६ ॥
वीर्यं भवानन्तोऽपीश यथानास्तां श्रमक्लमौ ।
अनन्तवीर्यताप्रस्तेरस्त्वन्माहात्म्यं परिस्फुटम् ॥ २३७ ॥
रागादिविप्रकाशत्म्यपापादुदिता तव ।
विरतिः सुसमास्यास्ये व्यनक्त्यात्यन्तिकं विभो ॥ २३८ ॥
मलाविलकलुषं तोयं यथेह स्वच्छतां व्रजेत् ।
मिथ्यात्वकर्दमापायाद् दृक्शुद्धिस्ते यथार्थताम् ॥ २३९ ॥
सत्याऽपि सम्पदः क्षेपास्त्वयि नार्थक्रियाकृतः ।
कृतकृत्ये बहिर्दिव्यसंपदो हि निरर्थकम् ॥ २४० ॥
एवं भाषा स्तुत्वा नाथ भवतोऽनन्तया मताः ।
तानहं श्रियताऽप्येश न स्तोतुमसमल्पधीः ॥ २४१ ॥
भगवंतमभिष्टुत्य विष्टपाधिगवैभवम् ।
महतः श्रीमंडपारंभे स्वकोष्ठेऽवीविशन्नृपः ॥ २४२ ॥
जम्बूद्वीपेऽत्र वर्षे समयमभिगते भारते तत्र देशे ।
नाम्ना विस्मापकीर्तौमिह भुवि मगधेऽपायसंपन्निधाने ।
तथापि श्रीगिरा राजगृह इति महाराजधानी पुरेऽस्मिन् ।
भूपः श्रीश्रेणिकाऽऽख्यः प्रभुसगिरिगिरौ वर्धमानस्य भूमौ ॥२४३॥

इति श्रीजम्बूस्वामिचरिते भगवत्पूर्वपश्चिमतीर्थंकरोपदेशानु-
सरितस्याद्वादनवपद्यगद्यविद्याविशारदपण्डितराजमल्ल-
साधुपासाह्वयसाधुटोडरसमभ्यर्थित श्रेणिक-
महाराजसमवसरणगमनवर्णनो
नाम द्वितीयोऽधिकारः ।

# अथ तृतीयोऽध्याय

भीयास्त्स दोदरः साधुः साधुपासांगन' कृती ।
दानशुद्धिस्तु यस्योर्वे' श्रेयांसनापमीयत ॥ इत्याशीर्वाद ॥
समव भवदुःखानां हर्तारं तीर्थनायकम् ।
अभिनंदन च वंदामो वंदित त्रिदशेश्वरैः ॥ १ ॥
ततो निभृतमासीन भवच्छकरकुड्मले ।
सदःस्वपाकर भर्तुं भवोपमांमसापुके ॥ २ ॥
भवस्या श्रेणिकभूपेन विनयानतमौलिना ।
विज्ञापनमकारीत्थ तस्मै जिनामुना गुराः ॥ ३ ॥
भगवन् ज्ञातुमिच्छामि कीदृशस्तत्त्वविस्तरः ।
मार्गो मार्गफलं चापि कीदृक् तस्य निदर्शय ॥ ४ ॥
वरमभावसितावित्थं भगवानतीर्थकृत् ।
तत्त्वं प्रपंचयामास गंभीरस्वरया गिरा ॥ ५ ॥
भवत्तुरस्य वचभाम्भे विकारितिर्नैव काप्यभूत् ।
दर्पणे किमु भावानां विक्रियाऽस्ति प्रकाशत ॥ ६ ॥
ताल्वाष्ठमपरिस्पंदि सर्वांगेषु समुद्भवा' ।
अस्पृष्टकरणा वर्णा मुखादस्य विनिर्ययुः ॥ ७ ॥
स्फुरद्गिरिगुहाशृंगसमतिध्वनितसन्निभं ।
अस्पष्टार्थका निरगात् ध्वनिं स्वार्थमुखात् मुखात् ॥ ८ ॥

१ पस्पर्शसहितं न वर्णसहितं न स्पन्दितौष्ठद्वयं
नो वाञ्छाकलितं न दोषमलिनं न श्वासरुद्धक्रमम् ।
शान्तामर्षविषैः समं पशुगणैराकर्णितं कर्णिभि
स्तन्नः सर्वविदः प्रणष्टविपदः पायादपूर्वं वचः ॥ इति संग्रहश्लोकः ।

विवक्षामन्तरेणापि विवित्ताऽऽसीत् सरस्वती ।
महीयसामचिन्त्या हि योगजाः शक्तिसंपदः ॥ ९ ॥
शृणु श्रेणिक तत्त्वार्थान् वक्ष्यमाणाननुक्रमात् ।
जीवादीन् मोक्षपर्यन्तान् गौतमस्तमभीषदा ॥ १० ॥
जीवाजीवास्रवबन्धो किल संवरश्च निर्जरणम् ।
मोक्षस्तत्त्वं सम्यग्दर्शनसद्बोधविषयमखिलं स्यात् ॥ ११ ॥
आस्रवबन्धवपुरिदं पुण्यं पापं स्वभावतो न पृथक् ।
तस्मान्नो दिष्टं खलु तत्त्वतया सूरिणा सम्यक् ॥ १२ ॥
षोढा द्रव्यापदेशः स्याद् द्रव्यलक्षणयोगतः ।
द्रव्यत्वं नाम किंचित्स्याद्गुणपर्ययवत्त्वतः ॥ १३ ॥
तल्लक्षणस्वभावत्वाज्जीवाः स्याद् द्रव्यसंज्ञकाः ।
पुद्गलश्चापि तथागाद् द्रव्यमित्यभिलप्यते ॥ १४ ॥
धर्माधर्माविहाकाशं कालश्चापि तथाविधः ।
चत्वारोऽपि च तत्त्वाते द्रव्यसत्तात्मकाः पृथक् ॥ १५ ॥
अस्तिकायस्वभावत्वात्तेऽपि पंचास्तिकायिकाः ।
प्रदेशप्रचयाभावात्कालस्य-नास्ति कायता ॥ १६ ॥
जीवादीनां पदार्थानां याथात्म्यं तत्त्वमिष्यते ।
सम्यग्ज्ञानं हि तज्ज्ञानं श्रद्धानं दर्शनं मतम् ॥ १७ ॥
कर्मादाननिदानानां भावानां च निरोधतः ।
चारित्रं तत्त्रयं विद्धि शुद्धसर्गं कर्मक्षालनात् ॥ १८ ॥

---

१ महापुराणे ।

२ जीवादिश्रद्धानं सम्यक्त्वं रूपं आत्मनः तत् तु ।
दुरभिनिवेशविमुक्तं ज्ञानं सम्यक् खलु भवति सति यस्मिन् । द्रव्यसंग्रहे ४१ ।

सम्यग्दर्शनमादौ स्याद्बोध्यं ज्ञप्तिरतः परम् ।
यस्माच्छ्रद्धानशून्यस्य ज्ञानस्याज्ञानता मता ॥ १९ ॥
उक्तं च—
" जीवादीसद्दहणं सम्मत्तं रूवमप्पणो तं तु ।
दुरभिणिवेसविमुक्कं णाणं सम्मं खु होदि सदि जम्हि " ॥२०॥
ताभ्यां पूर्वं हि ( पश्चाद्धि ) चारित्रं मार्गं चार्थक्रियाकरम् ।
क्रियमाणं तु तच्छून्यं स्यादचारित्रमवपतः ॥ २१ ॥
तत्त्वज्ञानार्थमेतेषां वाच्यं लक्ष्म यथागमम् ।
अस्तित्वादिव सामान्याज्ज्ञानादित्वं विशेषतः ॥ २२ ॥
तद्यथा तत्र जीवोऽस्ति स चानाद्यवसानकः ।
नित्यः स्वतश्च सिद्धत्वात्तच्च कार्याद्यभावतः ॥ २३ ॥
स चासंख्यातदेशी स्यादनन्तगुणवानपि ।
स्यातां तस्य व्ययोत्पादौ कथंचिदिविपर्ययैः ॥ २४ ॥
चेतनालक्षणो जीवो विज्ञेयाल्लक्षणादिह ।
ज्ञाता द्रष्टा च कर्ता च भोक्ता देहप्रमाणकः ॥ २५ ॥
गुणवान् कर्मनिर्मुक्तावूर्ध्वव्रज्यास्वभावकः[1] ।
परिणतोपसंहारविसर्पाभ्यां प्रदीपवत् ॥ २६ ॥
जीवः प्राणी च जन्तुश्च क्षेत्रज्ञः पुरुषस्तथा ।
पुमानात्मान्तरात्मा च ज्ञो ज्ञानी तस्य पर्ययाः ॥ २७ ॥

---

१ सम्यक्त्वे सति ज्ञानं सम्यग्भवतीति चतुर्थे तस्य निरूपणं क्रियते । तथाहि । [illegible] विभ्रमः [illegible] यद्यपि [illegible] तथापि तेषां हि ज्ञानं सम्यक्त्वं विना मिथ्याज्ञानमेव । [illegible] महाराष्ट्री ४१ ।

यतो जीवत्यजीवच्च जीविष्यति च जन्मसु ।
ततो जीवोऽयमाम्नातः सिद्धः स्याद्भूतपूर्वतः ॥ २८ ॥
भव्याभव्यौ तथा मुक्त इति जीवस्त्रिधोदितः ।
भविष्यत्सिद्धिको भव्यः सुवर्णोपलसन्निभः ॥ २९ ॥
अभव्यस्तु विपक्षः स्यादन्धपाषाणसन्निभः ।
मुक्तिकारणसामग्री न तस्यास्ति कदाचन ॥ ३० ॥
कर्मबन्धननिर्मुक्तस्त्रिलोकशिखरालयः ।
सिद्धो निरञ्जनः प्रोक्तः प्राप्तानन्तसुखास्पदः ॥ ३१ ॥
इति जीवपदार्थस्ते संक्षेपेण निरूपितः ।
अजीवतत्त्वमप्येवमवधानतया शृणु ॥ ३२ ॥
अजीवलक्षणं तत्त्वं पञ्चधैव प्रपञ्च्यते ।
धर्माधर्मौ च साकाशः कालः पुद्गल इत्यपि ॥ ३३ ॥
जीवपुद्गलयोर्यः स्याद्गत्युपग्रहकारणम् ।
धर्मद्रव्यं तदुद्दिष्टमधर्मः स्थित्युपग्रहः ॥ ३४ ॥
यथा मत्स्यस्य गमनं विना नैवाम्भसा भवेत् ।
न चाम्भः प्रेरयत्येनं तथा धर्मोऽस्त्यनुग्रहः ॥ ३५ ॥
तरुच्छाया यथा मर्त्यं स्थापयत्यथिनं स्वतः ।
न त्वेषा प्रेरयत्येनमथ च स्थितिकारणम् ॥ ३६ ॥

१ स्यादेतत्सेत्स्यतोऽपि यो न सेत्स्यत्यनन्तकालेनापि स भव्य एव । तस्य सिद्धिर्नास्ति सम्यक्त्वं उत्तरकाले अवश्यम्भावि भव्यत् स्यादिति ? तन्न किं कारणं ? सम्यक्त्वसद्भावात् । यथा योऽप्यतीतेऽपि कालेन कनकपाषाणो न कनको भविष्यति न तस्यांधपाषाणत्वं कनकपाषाणशक्तियोगात् । यथा वान्ध्यविधवायां योऽप्यतीतेऽपि काले न अपत्यमिच्छति न तस्यापत्यशक्तिः विद्यते । तथा सम्यक्त्वादिलाभशक्तियोग्यस्यापि भव्यस्यापि न मोक्षलाभः । त० राजवार्तिक १-७-९ । पृ. ७७ ।

तथैवाधर्मकायोऽपि जीवपुद्गलयोर्द्वयोः ।
निर्वर्तयत्युदासीनो न स्वयं प्रेरकः स्थितेः ॥ ३७ ॥
जीवादीनां पदार्थानामवगाहनलक्षणम् ।
यत्तदाकाशमस्पर्शममूर्तं व्यापि निष्क्रियम् ॥ ३८ ॥
वर्तनालक्षणः कालो वर्तना च पराश्रया ।
यथा स्वगुणपर्यायैः परिणन्तृत्वयोजना ॥ ३९ ॥
यथा कुलालचक्रस्य भ्रमणेऽधः शिला स्वयम् ।
धत्ते निमित्ततामेवं कालोऽपि कलितो बुधैः ॥ ४० ॥
व्यवहारात्मकात्कालात् मुख्यकालविनिर्णयः ।
मुख्ये सत्येव गौणस्य वाहीकादेः प्रतीतितः ॥ ४१ ॥
स कालो लोकमात्रैः स्वैरणुभिर्निचितः स्थितः ।
ज्ञेयोऽन्योन्यमसङ्कीर्णै रत्नानामिव राशिभिः ॥ ४२ ॥
प्रदेशप्रचयायोगादकायोऽयं प्रकीर्तितः ।
शेषाः पञ्चास्तिकायाः स्युः प्रदेशोपचितात्मकाः ॥ ४३ ॥
धर्माधर्मवियत्कालपदार्था मूर्तिवर्जिताः[२] ।
मूर्तिमत्पुद्गलद्रव्यं तस्य भेदानितः शृणु ॥ ४४ ॥

---

१ धर्माधर्मौ पुद्गल[illegible] द्रव्यमात्रमुपकारकमेव न पुनर्बल[illegible] । यथा च [illegible] ॥ [illegible] पृ. १८ ।

२ [illegible] ।

वर्णगंधरसस्पर्शयोगिनः पुद्गला मताः ।
पूरणाद्गलनाच्चैव संप्राप्तान्वर्थनामकाः ॥ ४५ ॥
स्कंधाणुभेदतो द्वेधा पुद्गलस्य व्यवस्थितिः ।
स्निग्धरूक्षात्मकाणूनां संघातः स्कंध उच्यते ॥ ४६ ॥
द्व्यणुकादिमहास्कंधपर्यंत तस्य विस्तरः ।
छायातपतमोज्योत्स्नापयोदादिमयत्वभाक् ॥ ४७ ॥
सूक्ष्मसूक्ष्मास्तथा सूक्ष्माः सूक्ष्मस्थूलात्मकाः परे ।
स्थूलसूक्ष्मकाः स्थूलाः स्थूलस्थूलाश्च पुद्गलाः ॥ ४८ ॥
सूक्ष्मसूक्ष्मोऽणुरेकः स्याददृश्यो ऽस्पृश्य एव च ।
सूक्ष्मास्ते कार्मणस्कंधाः प्रदेशानंत्ययोगतः ॥ ४९ ॥
शब्दः स्पर्शो रसो गंधः सूक्ष्मस्थूला निगद्यते ।
अचाक्षुषत्वे सत्येषामिन्द्रियग्राह्यवेक्षणात् ॥ ५० ॥
स्थूलसूक्ष्माः पुनर्ज्ञेयाश्छायाज्योत्स्नातपादयः ।
चाक्षुषत्वेऽपि संहार्यरूपत्वादविघातकाः ॥ ५१ ॥
द्रवद्रव्यं जलादि स्यात्स्थूलभेदनिदर्शनम् ।
स्थूलस्थूलः पृथिव्यादिर्भेद्यः स्कंधः प्रकीर्तितः ॥ ५२ ॥
आस्रवोऽपि द्विधा प्रोक्तो भावद्रव्यविभेदतः ।
आद्यो जीवात्मको भावः स चाशुद्धः परस्परतः ॥ ५३ ॥

१ पृथ्वीस्कंधपुद्गलस्य चाक्षुषत्वं । [illegible] जन्माज [illegible] तत्प्रकार भावरूपमिश्रणं । [illegible] भारं । [illegible] मेघुमाधवयं जन्माज [illegible] तत्प्रकार मिश्रणं । [illegible] धारस्पूलं । [illegible] मेघुमध्याज मेघुपवनं तद्धारस्थूलमिश्रणं । नः चतुर्थमित्यत्रिनिश्चिपमध्ये चाक्षुषं तत्सम्बन्धे । [illegible] स्थूलं । [illegible] [illegible] तत्स्थूलमिश्रणं । पजमाक्षु सूक्ष्मस्थूलं । [illegible] मिश्रणं तत्स्थूलसूक्ष्ममिश्रणं ।

मिथ्यात्वं च कषायाश्च योगोऽविरतिरेव च ।
भावाश्रवस्य विज्ञेया भेदाश्चामी यथागमात् ॥ ५४ ॥
सत्सु भावाश्रवेष्वाशु योग्याः कार्माणवर्गणा ।
गच्छति कर्मपर्यायैः स च द्रव्याश्रवः स्मृतः ॥ ५५ ॥
आश्रवपूर्वको बन्धो द्विविधः सोऽपि पूर्ववत् ।
आश्रितानां चतो चाथ प्रकृत्यादिप्रभेदतः ॥ ५६ ॥
आश्रवस्य निरोधो य स संवर उदाहृत[१] ।
तत्राद्यो भावशुद्धि[१] स्यात्परः कार्माणरोधतः ॥ ५७ ॥
निर्जरा च द्विधा प्रोक्ता सविपाकाविपाकतः ।
अथ संवरपूर्वा या निर्जरा सोऽत्यते बुधैः ॥ ५८ ॥
भावद्रव्यात्मिका द्वेधा निर्जरा तत्त्ववादिनाम् ।
तत्राद्या शुद्धभावः स्यात्कर्मनिर्जरणं परा ॥ ५९ ॥
पुंसोऽवस्थान्तरं मोक्ष[१] कृत्स्नकर्मक्षये सति ।
ज्ञानानंदादिधर्माणामाविर्भावात्मकः स्वतः ॥ ६० ॥
शुभो भावो हि पुण्यस्य पापस्याशुभ एव च ।
पूर्वो व्रतादिरूपात्मा तद्विपक्षः परः स्मृतः ॥ ६१ ॥
वदत्स्येवं जिनेशाने तत्त्वानि श्रेणिकं मति ।
चचीर्णमंबरात्किंचित्सासाचीजीमयं तदा ॥ ६२ ॥
विम्बं रवेर्द्विधा भूत्वा किमागच्छत्तत्त भूतले ।
द्रष्टुं लक्ष्मीं विरागस्य जिनस्यानतवैभवम् ॥ ६३ ॥

---

१ [illegible]

एतत्कस्मादभरात्मीशो धीमान् विस्मयतां गतः ।
पप्रच्छ स्वामिनं भूयः किमिदं दृश्यतेऽधुना ॥ ६४ ॥
पुनः मत्वाह धर्मेशो राजानं श्रेणिकं प्रति ।
विद्युन्मालीति विख्यातो देवोऽयं स्यान्महर्द्धिकः ॥ ६५ ॥
चतसृभिर्नारीभिः स समं समानुरागतः ।
भगवद्वन्दना सोऽत्र तीर्थे समागतस्तदा ॥ ६६ ॥
किंचित्तः सप्तमे चाह्नि दिवश्च्युत्वा भवान्तकः ।
भुवमेष्यति भव्यात्मा चरमांगी भविष्यति ॥ ६७ ॥
श्रुत्वेति तद्वचो भूपो भूयो भक्तिपरायणः ।
प्रीतो विज्ञापयामास भगवन्तं जगद्गुरुम् ॥ ६८ ॥
कृपासागर भो स्वामिन् यत्स्वयोक्ते सुयुक्तितः ।
षण्मासमायुषः शेषे यदा स्यात्त्रिदिवौकसाम् ॥ ६९ ॥
तदा धर्मांशमाला स्यान्म्लाना कण्ठावलम्बिनी ।
देहकान्तिर्भवेच्छाया मन्दायन्ते सुरद्रुमाः ॥ ७० ॥
तेजोऽस्याद्य दिवौ नवममस्य कान्तिमयं वपुः ।
द्युपतेऽस्य सतोऽपीह तत्कथं विस्मकारणम् ॥ ७१ ॥
इत्यतः संशयध्वान्तं निराकुर्वन् निर्लोऽस्तुमाम् ।
उवाच विष्टरोविष्टो गंभीरतरया गिरा ॥ ७२ ॥
राजन्नस्य कथापूर्वं सर्वं विस्मयास्पदं शृणु ॥
संवेगवर्द्धनं हेतुर्निर्वेदजननक्षमम् ॥ ७३ ॥
तद्यथा मगधे देशे रम्येऽथैव भासिते ।
धनधान्यहिरण्यादिपूर्णे मागध वर्णिते ॥ ७४ ॥

१ चरमशरीरी तद्भवमोक्षगामीति । २ देवानां । ३ भोगभूमिः सुभिक्षा नाम । ४ सिंहासने उपविष्टः । ५ आश्चर्यकारकं ।

तत्रैकदेशेऽस्त्यस्यास्तु वर्द्धमानाभिधं पुरम् ।
वनोपवनराजीभिः राजितं परिखादिभिः ॥ ७५ ॥
चतुर्गोपुरसंयुक्तं विशालं शालवेष्टितम् ।
कंदरीभिः समाकीर्णं विन्ध्यभूपांबरादिभिः ॥ ७६ ॥
तत्र विप्रा वसन्त्येव वेदमार्गानुरागिणः ।
याज्ञिकाः श्रेयसे हिंसां कुर्वन्तीहाधमाधमाः ॥ ७७ ॥
हन्यंते पशवस्तत्र गोगजाजानरादयः ।
मिथ्यांधकारसंछन्नैरेभिर्दुष्पथगामिभिः ॥ ७८ ॥
अथ तत्र वसेत्कश्चिद्द्विजो वेदविदांवरः ।
स्वधर्मकर्मनिष्णातो नाम्नायो वसुरीरित ॥ ७९ ॥
तस्य भार्या सती नाम्ना सोमश्रमा पतिव्रता ।
सीतेवैकपति[1] साध्वी भर्तृच्छन्दानुगामिनी ॥ ८० ॥
तयोः पुत्रावभूतां द्वौ पुण्यवर्णाविशेषवतौ ।
नाम्नाद्यो माधवदेवश्च द्वितीयो मधुदेवकः ॥ ८१ ॥
क्रमादधीतिनौ शास्त्रवेदव्याकरणादिषु ।
निदानादिचिकित्सासु वैद्ये तर्के च छन्दसि ॥ ८२ ॥
ज्योतिःसंगीतगानेषु काव्यालंकरणेषु च ।
किमत्र बहुनोक्तेन विद्याब्धे[2] पारगाविव ॥ ८३ ॥
माधवकौ सुवादेषु ज्ञानविज्ञानकोविदौ ।
अपि चास्यंतस्नेहार्द्रौ मिथो पुण्यसुखामिव ॥ ८४ ॥
इत्थं पुरं सुखर्द्धन्तौ यावद्द्वौ निरुपद्रवम् ।
ज्येष्ठो द्वादशवर्षीया लघुर्द्वादशवर्षकः ॥ ८५ ॥

१ चन्द्रमुखी इव । २ शास्त्रोदधिपारगौ इत्यर्थः ।

भवांतरे पुरा दुष्टकर्मोपार्जितपाकतः ।
जातस्तावत्स्वयं कुष्ठी महाव्याधिप्रपीडितः ॥ ८६ ॥
कुष्ठव्याप्तशरीरः स गलत्कर्णास्यनासिकः ।
शीर्णोपांगश्च सर्वांगं यातनाव्याकुलीकृतः ॥ ८७ ॥
अज्ञानिनार्जितं कर्म तद्विपाको हि दुस्तरः ।
स्वादु संभोक्ष्यते पथ्यं तत्पाकं दुःखदानिव ॥ ८८ ॥
मत्वेति धीमता त्याज्या विषया विषसंनिभाः ।
धर्मामृतं च पानीयं निर्विकारपदप्रदम् ॥ ८९ ॥
अत्यंतदुःखितो विप्रो जीवनाशापरिच्युतः ।
प्रविष्टो व्यसिते वह्नौ चितानाम्नि पतंगवत् ॥ ९  ॥
तद्वियोगात्तु शोकार्ता सोमशर्मापि तत्प्रिया ।
वेगात्तत्र चितायां वै तेन सार्धमपीविशत् ॥ ९१ ॥
मृतयोर्मातृपित्रोश्च जातौ तौ दुःखमानसौ ।
शोकसंतापसंतप्तौ संजातकरुणारवौ ॥ ९२ ॥
ततश्च बंधुभिरात्मीयैः सार्द्रैव प्रतिबोधितौ ।
तदा शोकं विमुच्याशु कृतवन्तौ पितुः क्रियाम् ॥ ९३ ॥
संतर्पणं यथाम्नायं सर्वं कृत्वा विमत्सरौ ।
पूर्ववत्स्वककार्येषु सोद्यतौ प्रयतस्तदा ॥ ९४ ॥
इत्थं दिनगणैः कैश्चिद्गतेऽथ मुनिपुंगवः ।
आगतस्तत्र सौधर्मो नाम्ना धर्मवपुः क्षमी ॥ ९५ ॥
सर्वसंगविमुक्तात्मा बाह्याभ्यंतरभेदतः ।
यथाजातस्वरूपोऽपि सज्जो गुप्तश्च गुप्तिभिः ॥ ९६ ॥

१ पूर्वकर्मोदयेन । २ सोमशर्मा । ३ पतन् पतन् प्रज्वलति इति पर्यन्त ज्वलनः ।
४ धर्मोऽपि ।

निःशंको जिनसूत्रार्थे सशंको भवपरिच्युतौ ।
दयार्द्रः सर्वजीवेषु निर्दयः कर्मघातने ॥ ९७ ॥
स्याद्वादी क्रमवध्वान्तो तेजस्वी भानुमानिव ।
सौम्यः शशीव सर्वांगि धीरो मेरुरिवोन्नतः ॥ ९८ ॥
भवदावाग्नितप्तानां स्याज्जैनो जलदोपमः ।
धर्मोपदेशनीरेण पापिता भव्यचातकाः ॥ ९९ ॥
सर्वसंघाष्टकोपेतोऽप्रतिमो विजितेन्द्रियः ।
ज्ञानविज्ञानसंपन्नो गणी गुणनिधिः क्षमी ॥ १०० ॥
समः शत्रौ च मित्रे च जीविते मरणे सम  ।
समो लाभे सुलाभे च समो मानापमानयोः ॥ १०१ ॥
रत्नत्रयधरो धीरो तपसालंकृतविग्रहः ।
अभवं सावधानश्च संयममतिपालने ॥ १०२ ॥
उपेक्षावानपि प्रायः करुणारसपूरितः ।
मुनिरुद्दयामास जैनं धर्मं दयामयम् ॥ १०३ ॥
भो भो भव्यजना यूयं शृणुध्वं धर्ममुत्तमम् ।
स्वर्गापवर्गयोर्मार्गं जैनेऽक्यसरणं शुभम् ॥ १०४ ॥
संसारेऽत्र सुखं न स्यादासर्वार्थदिवौकसाम् ।
कर्माधीनतया दृष्टं तदुदयवशवर्तिनाम् । ॥ १०५ ॥
तथापि मोहमाहात्म्यात्सत्यस्तमितलोचन  ।
संसारी मनुते सौख्यं संसक्तो विषयष्वपी ॥ १०६ ॥

१ विनाशने । २ सम्यग्दर्शनज्ञानचारित्राणि इति रत्नत्रयं । ३ यत्र ।

अनित्येषु शरीरेषु पुत्रपौत्रादिकेषु च ।
सप्तसप्तकसप्तेषु नित्यत्वं मनुते कुदृक् ॥ १०७ ॥
दुःखबीजेषु भोगेषु रमते स्वसुखाशया ।
तद्वियोगे च दुःखार्त[1] सीदत्येव पशुर्यथा ॥ १०८ ॥
क्षणं कामी क्षणं क्रोधी क्षणं तृष्णापरायणः ।
क्षणं भोगी क्षणं रोगी भूताविष्ट इवाचरत् ॥ १०९ ॥
रागद्वेषमयीभूय भूयस्तत्र जडात्मकः ।
दुर्मोच्यं कर्म बध्नाति येन चतुर्गतिं भ्रमत् ॥ ११० ॥
कदाचिन्नारको भूत्वा तत्र दुष्कर्मपाकतः ।
असह्यैर्यातनादुःखैस्ताड्यते सागरावधिः ॥ १११ ॥
क्वापि तिर्यग्गतिं प्राप्य जन्मनीचोऽकुलेऽथवा ।
दुःखानां च सहस्रैश्च पीडितोऽयं भ्रमत्यहो ॥ ११२ ॥
ततो नाभूत्स्थिरः क्वापि भव्यगतिचतुष्टयम् ।
विना सम्यक्त्वोपपत्तैर्जैनधर्मवशः ॥ ११३ ॥
अतः सुखार्थिनानेन प्राणिना धर्मसंग्रहः ।
कर्तव्योऽवश्यमेवायममलं जिनभाषितः ॥ ११४ ॥
इमां निरुपमां वार्तां प्रशमोद्गुणगर्भां मुनेः ।
श्रुत्वास्य भावदेवस्य कम्पितं हृदयं तदा ॥ ११५ ॥
ततो निर्विण्णचित्तेन तेन संसारभीरुणा ।
विज्ञप्तो गुरुरसौ मुनिः सौधर्मसंज्ञकः ॥ ११६ ॥
स्वामिन् त्रायस्व मामद्य निमज्जंतं भवाम्बुधौ ।
यथाकर्षयितास्मीयं स्थैर्यं सुखमव्ययम् ॥ ११७ ॥

1 भिन्नपाठः ।

ततो नाथ कृपां कृत्वा दीक्षां मे देहि निर्मलाम् ।
सर्वसंगपरित्यागलक्षणां भवनाशिनीम् ॥ ११८ ॥
श्रुत्वैतद्भावदेवस्य वाण्यामागर्भितं वच ।
जगाद वाचं सौधर्मो मुनिस्तत्क्षीणनक्षमाम् ॥ ११९ ॥
निर्विण्णोऽसि यदा वत्स मत्वा भोगांश्च रोगवत् ।
तदा दीक्षां गृहाणाशु रागिभिर्दुर्धरामिमाम् ॥ १२० ॥
गुरूपदेशतो नूनं धैर्यमालम्ब्य शुद्धधीः ।
निःशल्यो भावदेवोऽसौ प्रवव्राज द्विजोत्तमः ॥ १२१ ॥
ततःप्रभृति योगीन्द्रः साक्षाद्वाचंयमी यथा ।
स्वसंयमाविरोधेन विजहार महीतले ॥ १२२ ॥
गुणैर्गुरुणा गुरुणा सार्द्धं गच्छन्नकल्मषः ।
घोरमुग्रं तप कुर्वन् स समं सुखदुःखयोः ॥ १२३ ॥
स्वाध्यायध्यानमैकाग्र्यं ध्यायन्निह निरंतरम् ।
सम्यग्ज्ञानमयं तत्त्वमभ्यसन् विनयानतः ॥ १२४ ॥
धन्योऽस्म्यहं कृतार्थोऽस्मि यन्मया मार्गमुत्तमम् ।
जैनं धर्ममिति प्राज्ञो मन्यमानः कृतार्थताम् ॥ १२५ ॥
अथान्यदा स सौधर्मः सूरिः संघसमन्वितः ।
विहरन्नागतो भूयो वर्द्धमानाभिधं पुरं ॥ १२६ ॥
भावदेवो मुनिस्तत्र स सस्मार विशुद्धधीः ।
वर्तते मेऽनुजो भ्राता पुरेऽस्मिन्निति चिंतयन् ॥ १२७ ॥
भवदेव इति ख्यातो नाम्ना स्याद्विषयोषधीः ।
स्वास्मीहितमजानानो दुःश्रुतिप्रस्तचेतसः ॥ १२८ ॥

अनित्येषु शरीरेषु पुत्रपौत्रादिकेषु च ।
सपत्सपत्कलत्रेषु नित्यत्वं मनुते कुधीः ॥ १०७ ॥
दुःखबीजेषु भोगेषु रमते स्वसुखाशया ।
तद्वियोगे च दुःखार्तः सीदत्येव पशुर्यथा ॥ १०८ ॥
क्षणं कामी क्षणं लाभी क्षणं तृष्णापरायण ।
क्षणं भोगी क्षणं रागी भूताविष्ट इवाचरत् ॥ १०९ ॥
रागद्वेषमयीभूय भूयस्तम जडात्मकः ।
दुर्मोच्यं कर्म बध्नाति येन चतुर्गतिं भ्रमेत् ॥ ११० ॥
कदाचिन्नारको भूत्वा तत्र दुष्कर्मपाकतः ।
असह्यैर्यातनादुःखैस्ताड्यते सागरावधिः ॥ १११ ॥
क्वापि तिर्यग्गतिं प्राप्य जन्मनीचोऽङ्गसंश्रया ।
दुःखानां च सहस्रैश्च पीडितोऽयं भ्रमत्यहो ॥ ११२ ॥
ततो नाभूत्स्थिरः क्वापि मर्त्यगतिचतुष्टयम् ।
विना सम्यक्त्वमोपलब्धैर्भ्रमुरनंतशः ॥ ११३ ॥
अतः सुखार्थिनानेन प्राणिना धर्मसंग्रहः ।
कर्तव्योऽवश्यमेवायमश्रान्तं जिनभाषितः ॥ ११४ ॥
इमां निरुपमां वाचं श्रवणानुगमां मुनेः ।
श्रुत्वास्य भावदेवस्य कंपितं हृदयं तदा ॥ ११५ ॥
ततो निर्विण्णचित्तेन तेन संसारभीरुणा ।
विज्ञप्तो धर्मरासी मुनिः सौपसर्गकः ॥ ११६ ॥
स्वामिन् त्रायस्व मामद्य निमज्जंतं भवाम्बुधौ ।
यथाकर्णधरात्पोतं लभेयं सुखमव्ययम् ॥ ११७ ॥

१ मिथ्यात्वैः ।

उच्चैःस्थाने निवेश्याशु नमस्कृत्य पुनः पुनः ।
शरण्ये शरणे तत्रोपविष्टो गुरुसंनिधौ ॥ १४० ॥
योगिना भ्रातृमन्येन धर्मश्रद्धाविदानतः ।
समाश्रितः पुनः प्राह भवदेव इतीरितः ॥ १४१ ॥
कच्चित् कुशलं भ्रातः संयमे तपसां चये ।
एकाग्रचिन्तने ध्याने ज्ञाने स्वात्मसमुद्भवे ॥ १४२ ॥
मुनिः प्राह महाभाग सान्नैव भ्रातर मति ।
समाधानपरा वत्स मद्गकामा वय त्विदम् ॥ १४३ ॥
किमेतस्मिन् गृहे भाति मूर्तं वा वसतेऽधुना ।
दृश्यते मंडपारम्भो भ्रातस्त्वद्वसतौ यतः ॥ १४४ ॥
पचवालंकृतं सौम्यं वपुः परमसुन्दरम् ।
करे कंकणमेवत्वे दृश्यते चात्सचानकम् ॥ १४५ ॥
आकर्ण्यैतद् गुरोर्वाक्यं भवदेवो नताननः ।
ईषत्स्मितं स्खलद्वाक्यमुवाच व्रीडया युतः ॥ १४६ ॥
स्वामिन्नत्र वसद्विभो नाम्ना दुर्मर्षणः स्मृतः ।
नागदेवी च भार्यास्य कुलशीलगुणांकिता ॥ १४७ ॥
तयोर्नागवसुपुत्री मयेहाद्य विवाहिता ।
आज्ञामादाय बंधूनां चेदमाज्यसमक्षकम् ॥ १४८ ॥
मुनिः प्राह ततः श्रुत्वा युक्तिसगर्भितां गिरम् ।
भ्रातर्धर्माज्जगत्यस्मिन् दुर्लभं न किमप्यहो ॥ १४९ ॥
धर्मादैन्द्रं पदं नृणां सर्वसंपत्समन्वितम् ।
चक्रित्वं चार्द्धचक्रित्वं नृपत्वं च विशेषतः ॥ १५० ॥

---

१ शरणे साधुः शरण्यस्तस्मिन् । २ गृहे ।

५

एकशो बोधयाम्येनं परमोपेक्षमानपि ।
स्वयं गत्वापि तद्गेहे सिध्यतु मे मनोरथः ॥ १२९ ॥
अर्हद्धर्मोपदेशस्य मतिशुद्धं कथंचन ।
विरक्तो भवभोगेभ्यो निश्चितं स भवेन्मुनिः ॥ १३० ॥
चिंतयित्वेति चित्ते स्व भावदेवो मुनिस्तदा ।
आशिश्रियद्गुरोः पार्श्वमाज्ञामादातुकाम्यया ॥ १३१ ॥
दीयतां भगवन्नाज्ञा मह्यं भ्रातृविबोधने ।
बद्धकक्षाय कारुण्यात्त्वत्प्रसादैकभूमये ॥ १३२ ॥
एवं प्रसादयित्वा स्वगुरुं नत्वागमन्मुनिः ।
भवदेवगृहे रम्यं कुबेर्यापयमुद्दिमाह् ॥ १३३ ॥
अनंतरं ददर्शासौ भ्रातृगेहं सविस्मितः ।
महापार्श्वरायं हि तोरणश्रीविराजितम् ॥ १३४ ॥
मंगलातापनाद्विश्व बधिरीकृतदिक्पथम् ।
चित्रीकृतैःसमाकीर्णं भक्त्या ( त्या ) दौस्तिवर्णनम् ॥ १३५ ॥
लावण्यपूर्णनारीभिः कृतगानमहोत्सवम् ।
बंदिभिः[1] स्तूयमानं च मंत्रवाक्यैरलंकृतम् ॥ १३६ ॥
जातीकुंदादिपुष्पैश्च वासितं गंधशालिभिः[2] ।
सत्कर्पूरविमिश्रैश्च श्रीखंडैश्चर्चितं भृशम् ॥ १३७ ॥
मुनिनापि युतः सार्धं भावदेवः सुसंयतः ।
अविसंवतया प्राप्तस्तस्य भ्रातुर्गृहांगणे ॥ १३८ ॥
ततो दृष्ट्वा समुत्थाय पूर्णमभ्युत्थय विधिम् ।
नमस्कारयामास भवदेवो नतानतः ॥ १३९ ॥

१ मम उपकार गुरवे इति आशीर्य चतुर्थी पार्श्वं । २ भिक्षुकाः ।

तद्वैस्थान निवस्याशु नमस्कृत्य पुन पुन ।
भरण्ये भरणे तपोपविष्टो गुरुमानिधौ ॥ १४० ॥
यागिना भ्रातृमन्येन यमघद्वचान्द्रानतः ।
समाधित पुनः प्राह भवन्न इतीरत ॥ १४१ ॥
विधत कुशले भ्रात सयमे तपसां चये ।
एकाग्रचिंतन ध्यान प्रान स्यात्मसमुद्भवे ॥ १४२ ॥
मुनि प्राह महाभाग साञ्जन भ्रावर मति ।
समाधानपरा वत्स मदुक्ताया यय त्विदम् ॥ १४३ ॥
किमतास्मिन गृह माति भूतं वा यततऽधुना ।
दृश्यते मंडपारभा भ्रानस्त्वद्दर्शनो यत ॥ १४४ ॥
यतबाल्कृतं साम्यं वपु परमसुन्दरम् ।
करे कंकणमवस्त दृश्यत पात्सनाचरम् ॥ १४५ ॥
आकर्ण्यन् गुरोर्वाक्यं भवदत्तो नताननः ।
इषत्स्मित स्मलद्वाचमुवाच व्रीडया युतः ॥ १४६ ॥
स्वामिन्नत्र वसद्विभो नाम्ना दुर्मर्षण स्तुत ।
नागदत्ती च भार्यास्य कुलशीलगुणाङ्किता ॥ १४७ ॥
तयोर्नागनमृषुभी मर्यहाय विनाहिता ।
आज्ञामादाय वधूनां मैत्र्यावयसमस्तकम् ॥ १४८ ॥
मुनि प्राह तत श्रुत्वा युक्तिसर्गार्भितां गिरम् ।
आत्मधर्मोऽङ्गस्यस्मिन् दुर्लभं न किमप्यहो ॥ १४९ ॥
धर्मादिन्द्रं पदं नृणां सर्वसंपत्समन्वितम् ।
चक्रित्व मार्धचक्रित्व नृपत्वं च विभाव्यत ॥ १५० ॥

१ मरणे साधुः प्राणावतिन । २ मंदे ।

सप्तमाणिन्यासम्या गृहस्थस्यमिनाद्विधा ।
रत्नत्रयमयो धर्मः स त्रिधा जिनदेशित ॥ १५१ ॥
नरत्वं प्राप्य दुष्प्राप्यं यो न धर्मं समाचरत् ।
मूर्नं मन्ये वृथा तस्य जन्म प्राप्तमपि स्फुटम् ॥ १५२ ॥
पीत्वा वाक्यामृतं पूतं प्राप्तं मुनिपयोदृतः ।
भवदेवो व्रतान्युच्चैः श्रावकस्याग्रहीत्तदा ॥ १५३ ॥
संगृहीतव्रतेनाशु विज्ञप्तो मुनिनायकः ।
स्वामिन्नत्र गृहे मेऽद्य त्वया भोज्यं कृपापर ॥ १५४ ॥
निमत्तरजुनस्यैव भ्रातृधर्मानुरागतः ।
मुनिः स शुद्धमाहारं निरवद्यं जघास सः ॥ १५५ ॥
ततश्चर्यापथं पश्यंश्चचाल मुनिपुङ्गवः ।
तिष्ठन्यत्र सौधर्मो यतिवृन्दसमन्वित ॥ १५६ ॥
ततः पौरजनाः कैश्चिद्विनाप्यनुमतिं मुनेः ।
चेलुस्तमनुगच्छन्त सभयस्य कृतोऽन्ततः ॥ १५७ ॥
तत्सार्थस्वमिषादाय कियद्दूरं यथायथम् ।
गत्वा पुनर्नमस्कृत्य व्याहृत्य गृहमाययुः ॥ १५८ ॥
भवदेवोऽनुजो भ्राता तेन सार्धमजीगमत् ।
गृहे गच्छ गुरोराज्ञां प्रतीच्छामिति गौरवात् ॥ १५९ ॥
मुनिनाभाणि न तद्वाक्यमहिंसाव्रतपालकम् ।
धर्मध्वंसभिया भव्यप्रसता संयमान्विकाम् ॥ १६० ॥
एवमेव गता दूरे दूराद्दूरतरेऽपि च ।
मुमुक्षुः करुणार्णवो व्याकुलीभूतचेतसः ॥ १६१ ॥

स्मार स्मारं पुनश्चित्ते नागमसमुत्सांभुमम् ।
मूर्च्छामिव पद् पश्च मस्तकभ्रांतिविभ्रमम् ॥ १६२ ॥
किंचित्सोपायमालोच्य व्याजादूचे मुहुर्मुहुः ।
मुहं मिगमिपया मानवेषं मति सहादर ॥ १६३ ॥
स्वामिन् स्मरस्यर्यं धसा गन्धूतिममिसः पुरः ।
भीदार्यं त्वमह चास्त्वां मस्यह यत्र सार्यत ॥ १६४ ॥
इतः पश्य तडाग मा पङ्कमासीविराजितम् ।
भ्रातुं त्व मरालस्य यभार्या तस्यतु पुरा ॥ १६५ ॥
कथिमं कानने पश्य नानानोकहसङ्कलम् ।
पुष्पावचयायावां च यत्राजम्मतुरादरात् ॥ १६६ ॥
तय स्थली कृपानाथ चन्द्ररश्मिरिवोज्ज्वला ।
यत्र कन्दुकवेलायै तस्थु सर्वेऽस्मदादयः ॥ १६७ ॥
इत्यादिविविधालापैरास्मार्हृत यदपि ।
भवद्वपो न शशाकार्षमोहितुं तन्मनो मनाक् ॥ १६८ ॥
नापि पश्यति नेमाम्यां ना किंचिद्विचतयेन्मुनिः ।
ययसापि न कुत्सर यद्दृा पाडुसमया ॥ १६९ ॥
क्माद्र्वं मुगच्छन्तीं भ्रापतुगुरुसनिधौ ।
घुरं घमरयस्थिता बोदारां प्रपमाबिस ॥ १७० ॥
समस्त मुनिमुख्य मेघ सर्वेऽपि सयता ।
धन्याऽसि त्वं महाभाग यनार्नाणोऽनुमः क्षणात् ॥ १७१ ॥
तता भवत्या प्रणम्याथ गुरुं सोपमसप्तकम् ।
उपविष्टो यथास्थाने भावदेवा मुनिस्तदा ॥ १७२ ॥

१ मोण्डुर्ग । २ धनपर्शक्तोभ । ३ मनाग्द्र- पृथ । ४ चक्रिपर्व । ५ स्त्यै ।

इतिकर्तव्यतामूढः पर्याकुलितचेतसः ।
चिंतयामास चित्ते स्वे भवदेवो नवोढकः ॥ १७३ ॥
निरस्याथ गृहं यामि किं वा गृह्णामि संयमम् ।
इति संशयदोलायां क्षणं नास्थापि तन्मनः ॥ १७४ ॥
यद्वाहमस्यावश्चिरं यत्कार्यं कृत्वानया समम् ।
कांतया दुर्लभान् भोगान् भुंजामीति यथेप्सितान् ॥ १७५ ॥
इदमाकूतं तु मे चित्ते वर्तते स्वमनीषितम् ।
तस्यात्र कथयाम्यत्र व्रीड्यावतमानसः ॥ १७६ ॥
केदं पदं मुनीशानां दुर्धरं महतामपि ।
अस्मादृशा वराकाः क दृष्टा कामसर्गगकै ॥ १७७ ॥
अथ चेम करोम्यत्र गुरुवाक्यमलक्षणात् ।
अयं ज्येष्ठो मम भ्राता माभूदाज्ञापरायणः ॥ १७८ ॥
विमृश्यैवमयप्रोऽपि कृत्याकृत्यविचक्षणः ।
सव्रत्यः कृतधैर्योऽसौ दीक्षामादातुमुद्यतः ॥ १७९ ॥
चिंतितं तेन चित्ते स्वे सलज्जेन विमुह्यता ।
गमिष्यामि पुनर्गेहं यथाकालमतः परम् ॥ १८० ॥
विमृश्यैतत्ससंभ्रमः स भवदेवो नताननः ।
अवादीन्मुनिमभ्यर्च्य यथा पूर्वविचेष्टितम् ॥ १८१ ॥
मुने परोपकाराय बद्धकक्ष महातप ।
मयि दीने कृपां कृत्वा देहि दीक्षां स्वमार्हतीम् ॥ १८२ ॥
विज्ञातो मुनिना पूर्णे सावधिज्ञानचक्षुषा ।
गाम्भीर्यमपि दुर्लक्ष्यं स्वाभिप्रायं द्विजोत्तमः ॥ १८३ ॥

१ नवविवाहितः । २ अनावरणं ।

प्रविष्टः स ददर्शोच्चैर्जिनचैत्यगृहं शुभम् ।
उच्चैस्तोरणसंयुक्तं ध्वजमालाभिराततम् ॥ १९५ ॥
मणिमुक्तामयैश्चारु भूषितं भूषणैः शुभैः ।
यातायातांगनाभिश्च कृतगानमहोत्सवम् ॥ १९६ ॥
त्रिः परीत्याथ भक्त्या तां वंदित्वा प्रतिमां चिरम् ।
उपविष्टो यथास्थानं भवदत्तो नाम्ना मुनिः ॥ १९७ ॥
तत्र चैत्यालये स्थाता सार्यिका या व्रतान्विता ।
चर्मास्थिस्नायुसर्वांगी मुनिं दृष्ट्वा ववन्द तम् ॥ १९८ ॥
समाधानं मूलं तज्ज्ञं संयमं तपसि व्रतं ।
ध्यानं ज्ञानं च स्वाध्यायं तथा कश्चिद्विचारितम् ॥ १९९ ॥
मुनिनापि यथायोग्यं पृष्ट्वा तत्कुशलं तदा ।
सा तत्रैव तां समुद्दिश्य प्राक्कमवाप्सुराक्षना ॥ २०  ॥
आर्ये पूर्वमभूतां द्वौ विद्वांसौ ललिताकृती ।
द्विजस्यार्यवसोः पुत्रौ विख्यातौ सर्वसम्मतौ ॥ २०१ ॥
तत्र व्याख्यानयोऽन्यैर्मोनिद्य इति स्तुतः ।
भवदेवो लघीयांश्च वाग्मी मवनिद्रांवर ॥ २०२ ॥
पावने चेहिमानासि स्मृति मे संशयाच्छिनत् ।
क कथं तिष्ठतस्तौ द्वौ का कथा चाधुना तयोः ॥ २०३ ॥
सोऽथ तद्वाक्यमाकर्ण्य निर्विकारां मुनेरिताम् ।
धन्यौ तौ मुनिनाथौ द्वौ जातौ ध्यानादिसंस्थितः ॥ २०४ ॥
श्रुत्वैतद्भवदेवोऽसावुक्तवानसमञ्जसम् ।
उद्गिरन्निव स्वार्थमात्माकूतं वचस्तदा ॥ २ ५ ॥

१ वतिवर्येन । २ कश्चित् प्रमादीपदे ग्लमद ।

आर्ये यद किमप्यन्यत्पृच्छामीह महादरात् ।
न संदिग्धवचो दूष्य महतामपि संमतम् ॥ २०६ ॥
नाम्ना नागवसू यासीन्नवदक्षविवाहिता ।
सा विना पतिना बाला यावदधामवत्कथम् ॥ २०७ ॥
इति वार्ता विकारैः स ज्ञातो भर्तृचरस्तया ।
पश्चात्ताप मुहुर्वेस्या भिया कंपितयेव सा ॥ २०८ ॥
नून मुनिपद त्यक्तमयमिच्छति मूढधी ।
त्यक्तधैर्यातिकामांधा दुःसहस्मरपीडित ॥ २०९ ॥
अतो धर्मानुरागाद्धि वाच्योऽस्य मयाधुना ।
यथाकथंचित्सद्वाक्यैर्जिनोक्तैरमृतोपमैः ॥ २१० ॥
अथ चेत्सस्मरश्चार्य भोगानिच्छति सर्वतः ।
स्वमतं च मे भूयात्प्राणतोऽपि गरीयसि ॥ २११ ॥
विचिंत्येति क्रियाक्रांता सौधे साक्षात्स्वयमता ।
विनयेनानता मूर्ध्नि भारतीव प्रियंवदा ॥ २१२ ॥
स्वामिन्वीक्ष्य महाभाग धन्योऽसि त्वं जगत्त्रये ।
चारित्रं यत्त्वया प्राप्त दुष्प्राप्यं महतामपि ॥ २१३ ॥
त्वं पूज्यस्त्रिदिवेशानां मुनि परमपावनः ।
सर्वसंपन्निधानस्त्वं मोक्षलक्ष्मीस्वयंवरः ॥ २१४ ॥
तारुण्येऽपि महाभोगान्कश्चैतांस्त्यक्तुमर्हति ।
भवताऽन्यत्र भो सौम्य सुरलोकेऽपि दुर्लभान् ॥ २१५ ॥
आरंभे मधुराभासा विपाके कटुकाः स्फुटम् ।
हालाहलनिभा भोगा सद्यःप्राणापहारिणः ॥ २१६ ॥

सर्वकाऽप्यवरस्थायी प्रकृतेस्तेजसां चय ।
तमस्तोमं विधुन्वानो नादेति किमु भानुमान् ॥ ८६ ॥
मूर्ख च वृद्धवाक्येषु यत्परीक्षासम वचः ।
य कार्यसाधनायालमेकोऽपि च लक्षायते ॥ ८७ ॥
इत्यादिकां कथामासां रचितां श्रेणिकेन वै ।
धारयामास वा मूर्ध्नि सादराज्जम स्वागम' ॥ ८८ ॥
आज्ञया स्थापयामास खगा दिव्य विमानके ।
जम्बूस्वामिकुमार तमनौपम्यबलान्वितं ॥ ८९ ॥
व्योममार्गो तदा याने गच्छति स्म त्वरान्वितं ।
श्रीममापप्सित स्थान यथा वेगात्मनो जव' ॥ ९० ॥
अयानु त स भूपाऽपि मतस्थं भणिकस्तदा ।
चतुरगचम्वापतः सार्धं सर्वमटाद्भटै' ॥ ९१ ॥
भर्यः प्रस्थानशंसिन्यो नेदुरामद्रनि'स्वना' ।
प्रकाण्डस्वनितानकामातन्वानाः शिखंडिनां ॥ ९२ ॥
चमतां रयचभाणां चीत्कारैर्यरपिवे ।
बृंहितैश्च गजेन्द्राणां शब्दाद्वैत तदाभवत् ॥ ९३ ॥
षडंगबलसामग्र्या सपम' पार्थिवरमा ।
प्रतस्थे श्रेणिकः भूपा रत्नचूर्णामिगपिया ॥ ९४ ॥
प्रदान् गजघटाघंषा रेम स अपचम्न ।
गिरिणामिव संपात' सधारी सदपानिभि ॥ ९५ ॥
'स्पन्दनस्यन्दनमासारमिव भूभिषद्विषैः ।
प्रतस्थ स्यन्दिवर्षं ऊर्मैरिव सनिभ्रर ॥ ९६ ॥

१ च-न्दु। २ न्ना।

मयस्तंबेरमा रेजुस्तुंगाः भृंगारितांगकाः ।
सांद्रसांध्यातपाक्रांतास्पर्वता इव भूधरा ॥ ९७ ॥
चमूमतंगमा रेजुः सज्जाः सज्जयकेतनाः ।
कुसमैक्षा इवायाताः भयाः स्वपक्षमर्दने ॥ ९८ ॥
गमस्कंधगता रेजुर्दुर्मेता विश्वतोमुखाः ।
प्रदीपोद्गतनेपथ्या दर्पाः संदीपिता इव ॥ ९९ ॥
कौसेयैर्वैर्निघातोग्रधाराग्रैः सादिनो बभुः ।
मूर्तीसूय सुलोपाग्रसवैर्या स्वैः पराक्रमैः ॥ १०० ॥
धन्विनः शुरनाराचसंभृतेषुधयो बभुः ।
घनस्थाया महाधाराकोदरस्थैरिवाशिभिः ॥ १०१ ॥
रथिनो रथकृत्यासु संभृतोचितवेवयः ।
संग्रामभाषितरणे भास्थिता नायिका इव ॥ १०२ ॥
भटा हस्त्युरसं भेजुः सन्निर्वर्तद्गुन्दुकाः ।
समुत्खातनिखातासिपाणयः पदरक्षणैः ॥ १०३ ॥
भस्फुरत्स्फुरदच्छौघा भटाः संतर्पिता परे ।
औत्पातिका इवानीका सोल्का मेघाः समुस्थिता ॥ १ ४ ॥
करवालं करासाग्रं करे कृत्वाऽभयोऽपरा ।
पश्यन् मुखरसं वासिन् स्वसौंदर्यं परिचालितान् ॥ १०५ ॥
करार्गं विधृतं खड्गं तुलयत्कोऽप्यभात्कुठा ।
ममिमिस्तुरिवानेन स्वामीसत्कारगौरवं ॥ १०६ ॥
महायुक्यपदानां साधनानि भवस्थिरे ।
पादाविरास्थिरग्रीवरथकम्पापरिच्छिदैः ॥ १०७ ॥

---

१ वनहस्ती । २ घाते । ३ बनारसः । ४ तूणीरः । ५ तनयनि । ६ शिर स्मन्ते इति शिरस्त्राः, तत्तुल्यका कवचाः ।

क्वचिदिक्षुवणमूलेषु निर्लीनमधुपायसी ।
विलोक्य सस्यकर्त्रीनां सस्मार प्रियपीपितां ॥ ११९ ॥
पच्छायासक्तमोस्तुंगान् सर्वसंभोग्यसंपद॰ ।
मार्गद्रुमान् समद्राक्षीत्स नृपानजुकुर्वतः ॥ १२० ॥
सरसीरम्बुनाऽपश्यत् सरागरजसा ततः ।
सुवर्णकुड्मिमावृक्ता मधुरप्रसुरदि सन्नतीः (?) ॥ १२१ ॥
पक्षरणुभिरारब्धे दोषा मन्ये नमस्पर्शी ।
करुणां स्वंवीं वीक्ष्य चक्र चक्रवाककामिनी ॥ १२२ ॥
गर्वांगणानयापश्यद्राम्यद्वारण्यचारिण॰ ।
सीरमभानिवागस्तं सरत्सीरघ्नवांकितान् ॥ १२३ ॥
सौरमेयान् समुंगाग्रसमुत्खातवस्यधातुमान् ।
मृणालानि पक्षासीम किरणान्यस्य दुर्मदान् ॥ १२४ ॥
वात्सकं सीरसंतोपान्वि निर्मलकविग्रहम् ।
सोऽपश्यचापलस्यन परां कोटिं कृतास्पदाम् ॥ १२५ ॥
ध्यमति सुवमामाहुमिवात्मलमिवानतान् ।
सुपक्वकपिसानन्नं कलमक्षेत्रमैसत ॥ १२६ ॥
नौद्दस्य कर्णयोगीति नृणां वक्तुमिवोधतं ।
पश्यति स्म स मृणाली रामन्यकपारिवृतः ॥ १२७ ॥
सावतसितनीलाम्भाः कर्मैरणुभितस्तनीः ।
इक्षुदंडभृती पश्यत् स्पसीस्यो कुर्वतीः स्त्रियः ॥ १२८ ॥
हारिगीतस्वनाकृष्टर्घोषिता हंसमंडलैः ।
शालिगोप्यो दृशोरस्य मुदं वितुर्मगृहिकाः ॥ १२९ ॥

१ हैमवर्णैरभिः । २ रणमान् । ३ पक्षेण मीयन्तु मीलमारव्ययीति पतयामर्ह ।

भद्र श्रुत्वा मृगांकेन पाठयित्वाथ प्रेषितः ।
तत्सर्वं वक्तुमिच्छामि यस्य साम्प्रतं मया ॥ १६३ ॥
श्रुत्वा दत्तवरा द्वाःस्थस्तस्यास्थाने गतो जवात् ।
भर्तुं नत्वोत्तमांगेन प्राप्तावसरं विचक्षणः ॥ १६४ ॥
देव कश्चिच्चरो वाग्मी त्वद्द्वारि स्थितवानिह ।
वक्तुमिच्छति सान्येव पुण्यस्तद्दर्शनात्सुख ॥ १६५ ॥
श्रुत्वा रत्नशिखश्चापि तद्वच श्रुतिपेशल ।
मंक्षु मयमप स्वं (?) मनितपूर्वं मत्सरी खगः ॥ १६६ ॥
आज्ञामादाय द्वाःस्थेन तत्समीपं प्रवेशितः ।
जंबूस्वामिकुमारास्यो ज्वलत्कोत्या वपुश्छविः ॥ १६७ ॥
प्रविष्ट स दिदीपे वा तिग्मांशुरिव भूतले ।
सर्वे वेमः खगेशानां तिरस्कुर्वन् स्वकांतिभिः ॥ १६८ ॥
दृष्ट्वा त रत्नचूलोऽस्य क्षण विस्मयमाप सः ।
कथं संभावि दूतत्वमस्य कांतिमतः स्वतः ॥ १६९ ॥
यत्किंचिद्धुचितं नाम नमस्काराक्रियादिकम् ।
न कृतं चाटु वाक्यं वा स्वीयते तन स्वभवत् ॥ १७० ॥
नूनं कश्चिदपूर्वोऽयं यथा वा मानवोऽथवा ।
परीक्षां कर्तुमायातो मद्वलस्यापि गौरवात् ॥ १७१ ॥
चिंतयन्निति यमस्थ रत्नचूलः कुमारकम् ।
भ्रामयस्त्वं कुतो दक्षास्तिमर्थं मम सन्निधौ ॥ १७२ ॥
श्रुत्वाथोपसकुमारस्य रत्नचूड खगं प्रति ।
नीतिमार्गे समाधिस्य त्वां विनोपयितुं जवात् ॥ १७३ ॥

१ धीत्रे ।

यथा दर्पसमावेशाच्छूर्पति रावणादय[1] ।
भूत्वा चाभापदप्रभाजो मृत्वा या दुर्गतिं ययुः ॥ १८२ ॥
इयं कन्या ददावाद्यौ श्रेणिकाय महीभृते ।
भवतेऽद्य कथं दातुं सोऽपिता दुर्यशोभयात् ॥ १८३ ॥
न चार्यं क्षात्रधर्मोऽस्ति संगरायसपलायनम् ।
जीवनस्य कृते धीमान् कः पिबेदुर्यशोविषम् ॥ १८४ ॥
तत्प्रसीद खगाधीश प्रमादं मा विधेहि भोः ।
गर्हितं वचिद वाक्ये वक्तव्यं न त्वया क्वचित् ॥ १८५ ॥
इति सूक्तिसुधाःपुष्पैर्गुम्फितां चातिशीतलाम् ।
मालामुष्णतरां मेने विपरीत खगस्तदा ॥ १८६ ॥
ततस्तामसजः क्रोधाग्निविस्फुरिताधरः ।
ज्वलत्कोपानलज्वालां खगो वाचमुदीरयत् ॥ १८७ ॥
दूतमन्योऽसि रे बाल यस्त्वमभ्यागतो गृहे ।
अवध्योऽसि तथा नान्या गतिस्त्वादृक् शठस्य वै ॥ १८८ ॥
मत्वाऽभेऽनुचितं वाक्यं विरुद्धं वैरवर्धनम् ।
यद्भ्रम लज्जसे दूत स्वामिकार्यविनाशकृत् ॥ १८९ ॥
वाच्यावाच्यं न वेत्सि त्वं न वेत्सि च बलाबलम् ।
केवलं वावदूकोऽसि धाष्टर्ये (वै?) नाट्यभिव ॥ १९० ॥
भानुप्रकाशितुं नालं यथा घूकोऽपि कौशिकः ।
वाचालस्त्वं तथा दूत नालं वस्तुमिदं वचः ॥ १९१ ॥
नीरक्तः किमु हैमाद्रिं भेत्तुमुत्सहते शठः ।
मृगाङ्कः श्रेणिकौ नालं मामाराधयितुं युधि ॥ १९२ ॥

1 पृच्छरस ।

कियत्कालं कुमारेण योद्धारो बलशालिनः ।
आतिथ्यं यमगेहस्य नीता दोर्दण्डविक्रमैः ॥ २०४ ॥
पौरुषं चरितुमाशक्तैरारादसिसहायकैः ।
अथ येन क्षिमप्यस्तैर्मृतस्यामरणैरिव ॥ २०५ ॥
अथ व्योमगतिर्ज्ञात्वा द्वौ मिथो योद्धुमुद्यतौ ।
कुमारस्यार्पयामास कृपाणं निशितं स्वतः ॥ २०६ ॥
अथावोचत्कुमारं स नाम्नाकाशमतिस्तदा ।
अधिरुह्य विमानं मे पातयारिकुलं महत् ॥ २०७ ॥
श्रुतं तेन कुमारेण वाचा क्षणेन संस्थितम् ।
न स्थितं भुविरङ्कस्य वाक्यं चापि सगोऽस्थितम् ॥ २०८ ॥
युद्धेन स्थिरेणापि किं किल प्राणरक्षया ।
भवनामावेव नूनमस्ति चेत्पुण्यवद्वपुः ॥ २०९ ॥
उक्तं हि—
" ब्रह्मचारी(?) तृणं नारी शूरस्य मरणं तृणम् ।
दातुश्चापि तृणं लक्ष्मी निस्पृहस्य तृणं जगत् " ॥ २१० ॥
दिदीपेऽथ वरो तस्य हस्ते खड्गलता तदा ।
दारितारिपक्षैर्लिप्ता यमजिह्वेव जित्वरी ॥ २११ ॥
यत्र यत्राभ्यहार्षं स खड्गपाणिः कुमारकः ।
तत्रारिमस्तकस्तोमो न्यपतद्भुवि वेगतः ॥ २१२ ॥
असिद्वन्द्वमरापार्थं कुर्वन्तोऽनुकुमारकम् ।
सर्वे निरर्थका जाता रत्नचूलस्य सैनिकाः ॥ २१३ ॥

---

१ युद्धे ।

मन्मथायस्य सम्यात्र रामाखाऽपि न भिद्यते ।
निर्जितस्मरसैन्यपु किमपाङ्गपातैरपि ॥ २१४ ॥
युद्धं कुर्वेति यथास्मिन् सावधानतयाहव ।
स्यात् सत्पुरतः काऽपि न मनाक् भयावह ॥ २१५ ॥
यथा तिग्मकरश्चैव हंति संतमस जवात् ।
समतापस्तथा साऽपि जयान रिपुसंहतिम् ॥ २१६ ॥
अथावसरे दूतास्तनचिपम चारिणा ।
मृगांकस्य चरणाग्रे गत्वा तत्र निवेदितम् ॥ २१७ ॥
देव कश्चित्समायाता भवत्पुण्यविपाकतः ।
त्वत्सैन्यमहारण्य ज्वलदावानलोपमः ॥ २१८ ॥
अधुना युद्धं करोत्येष निभृत सर्पति स्थित ।
हंत मूनस्ति ( स्मनति ) नारीणां दृजयाऽप्यविग्रह ॥ २१९ ॥
स वपुस्तावर्णयाम्य भिन्ना या पूर्वजन्मनः ।
मन्मथमाननापि त्वद्दृश(?) मूर्तिमानिव ॥ २२० ॥
अथवा धनिकस्याय कश्चिद्वीराग्रणीभट. ।
तस्यादेवन्नादेन सार्द्ध वीरः समागमत् ॥ २२१ ॥
यथम्युक्तः चरणेन्य कणागायस्ता गते ।
रोमांचितो मृगांकाऽभूद्रपूर्णमिव विधित ॥ २२२ ॥
समम्पूर्ण [illegible] समा भूत्वरतिर्मं मयम् ।
पान्नाभरणमानपुदार्दर्श मर्गायसि ॥ २२३ ॥
मेदः संग्रामयम्म नामनान्मृगाम्यमणः ।
हन पुदम्य मर्गान्ये निमगाम पुराह्नरि ॥ २२४ ॥

१ म्यर्थेन

ततो दुंदुभिनिर्घोषै रत्नचूलोऽप्यनिद्रितः ।
ज्वलितः कोपाग्निना योद्धुं कृतांतः कोपितः किमु ।
अथ द्वाभ्यां च सैनाभ्यामारब्धं युद्धमुल्बणम् ।
हाहाकारकरं रौद्रं कृतभीषणनिःस्वनम् ॥ २२६ ॥
दंतिनो दंतिभिः सार्धमश्वैरश्वा रथै रथाः ।
पदातयो युयुधुः सर्वे खगाश्चापि खगैः[1] समम् ॥ २२७ ॥
यावान्सर्वोऽपि संग्रामो यावद्गातस्तवानघः ।
भास्वान् सहस्रैर्न तावदाप्नुवेऽस्तं समा चयम् ॥ २२८ ॥
क्वचिच्चिदीर्णो यत्र गजच्छोणितवारिभिः ।
हृदयोऽन्तरसंभिन्ना नापकर्षुं रिपून् वहन् ॥ २२९ ॥
यत्रोत्थिते सुरास्तावदंबरे रजसि स्थिते ।
धनुष्टंकारनादेन जाता मतिमदैर्मदाः ॥ २३० ॥
सैनिकाश्वखुरोत्खातधूलीभिश्छादितेऽम्बरे ।
दिनं रात्रीयते स्माथ गगने धनुषायते ॥ २३१ ॥
ज्ञायते स्म भटो यत्र मिथस्तन्नामदेशनात् ।
रथो रथांगचीत्कारैर्घंटाटंकारितैर्गजः ॥ २३२ ॥
कश्चिद्वनानां चीत्कारी हुंकारोऽत्र धनुष्मताम् ।
मध्यभारे रेकारवश्च मावर्तते क्वचित् ॥ २३३ ॥
कैश्चिद्भटैः परभटा यथा निर्भिद्य संगरे ।
गजैर्गजा रथैर्भग्ना रथाः पेतुश्च पत्तयः ॥ २३४ ॥

१ पौरुषेणेति इति पाठः ।

तावज्जम्बूप्रभावेन शिरस्यनमताड्यत् ।
जम्बूस्वामी महाबाहु' विनेदुः समरांगणे ॥ २४५ ॥
वज्रसंहननोपेता दुर्जया वीरकर्मणि ।
यथापृच्छन्मृगांकः स हास्तिकं स्वीयमादरात् । २४६ ॥
सोऽप्ययमापतितो भूमौ वेगात्खेटेन पराजितः ।
मयवीत्तस्मितः सोऽप्यं न स वेत्ति कथं प्रभो ॥ २४७ ॥
विद्याधीशो महात्म्यो रत्नचूलोऽप्यमात्मना ।
जम्बूस्वामिकुमारेण बाणैर्जर्जरितो भृशम् ।
विमानाद्भूमिमानीतो बद्धः स्वभुजपंजरे ॥ २४८ ॥
गाढं स विपरीतस्तु वीर्यमस्य गता मृधम् ।
बद्धेऽस्मिन् सैनिकास्तस्य नेशु' सर्वे दिशोदिशम् ॥ २४९ ॥
ततस्ते सन्नद्धे रथा मानीताः स्वामिनोऽन्तिके ।
सर्वे गलितमानाभास्तत्पुरेत्य हतौजसः ॥ २५० ॥
दृष्ट्वा मृगांकविद्याभृच्चक्रं नभश्चराधिपम् ।
सर्वे विद्याधरास्तत्र तुष्टुवुर्जम्बूकुमारकम् ॥ २५१ ॥
धन्योऽसि त्वं महाभाग रूपनिर्जितमन्मथ ।
क्षात्रधर्मस्य प्रागल्भ्यमद्य जातं त्वया कृतम् ॥ २५२ ॥
नेदुरानकतूर्याणि गर्जितानीव वारिधेः ।
मृदंगपटहादीनि सैन्ये वीररसप्लुतः ॥ २५३ ॥
वंदिवृंदमपारार्थं चक्रुरानंदभाषिणः ।
वर्णयेता महावीर्यं कुमारस्य जयावहम् ॥ २५४ ॥

१ गीर्गिरिनम्नुपादि ।

व्योमगतिश्च सानंदास्कारयामास सत्क्षणे ।
प्रीतिपर्वनमत्यंत जंबूस्वामिमृगांकयो ॥ २५५ ॥
जयो लब्धः कुमारेण आजुर्भुर्जितबाहुना ।
सहस्राष्टमितान् हत्वा लीलया खचराधिपान् ॥ २५६ ॥
एक एव सदा सेव्यो धर्मो सौख्यमभीप्सुभिः ।
यद्विपाकात्कुमारेण जयश्रीः किंकरीकृता ॥ २५७ ॥

*इति श्रीजम्बूस्वामिचरित्रे भगवच्छ्रीपश्चिमतीर्थकरोपदेशानुसरित स्याद्वादानवद्यगद्यपद्यविद्याविशारदपण्डितराजमल्लविरचिते साधुपासारूयमसाधुटोडरसमभ्यर्थिते निर्वितरक्ष- मूलविद्याधरप्रतिबद्धसम्बन्धजम्बूस्वामिवि जयवर्णनं नाम सप्तमः सर्गः ॥८॥*

# अथाष्टम सर्गः

जिनयस्वेति सद्वाक्यं पठित स्वपुरोभसो ।
माशामिव सिषेवि त्वं मूर्ध्नि श्रीसाधुचरिरः ॥१॥ इत्याशीर्वादः ।
विमलं विमलध्यानं संस्तुवे विमलाशयः ।
सन्द्राभगः मनेवे पानेवधीयोऽयं (नान्वधीयोऽयं) वंदेऽनंतवधमाश्रये
अथापरस्यकुमारः स धीमत्सामायेषापनिम् ।
भावयामास कारुण्यात्मनिस्यां संसृतिस्थितिम् ॥ २ ॥
अहो भेदविसंयोगाद्युष्मीभूतं जर्थं कश्चित् ।
तस्कि द्रव्यं गुणायेसं जीवलं न समावतः ॥ ३ ॥
तस्छिष्टो ज्ञानवस्त्रिय पिगिमां संभूतिस्थितिम् ।
अमी दुर्योधमानांपा मृत्वा या दुर्गतिं ययुः ॥ ४ ॥
ईपीकविषयासक्ता कैवलं मृतिमाप्नुवतः ।
स्वयमेत्य पतंगाय यथागाद्वशिरोपिपि ॥ ५ ॥
अहो कर्मपिस्संमास----कामापि न शांत--- ।
( भत्तु ) न तृष्णाहययै वै जायन्ते विषयाः स्वतः ॥ ६ ॥
आपाके कटुकं यस्य किंपाकस्य तरोः फलम् ।
न स्वादु पीजे मपितुमर्हति ॥ ७ ॥
अथ षट्विषयाधानां संमाप्ता च द्रुतं स्वतः ।
न्यायात्कर्ये क -- --- भियस्कराः स्मृताः ॥ ८ ॥

---

१ दुर्योधैम । २ दुःखमूर्मि । ३ द्विरिष्पणि ।

इदमभोषितं किञ्चिद्यत्तच्छातं निसर्गतः ।
मादानसदृश कार्यं          दुःखवत् ॥ ९ ॥
पर किंतु महर्षिभं यदमी ज्ञानशालिनः ।
केचिद्विधानपि सेवंते परलोकार्थि-- -- ॥ १० ॥
अहो कोपि ग्रहो मोहो दुस्त्याज्यो महतामपि ।
यस्यानुभावतो मधुरास्मीयं मनुते परम् ॥ ११ ॥
( मृगा ) मरीचिकां पातुं धावेत्याशु जलाशया ।
तथा तथा समज्ञानादीहेत विषयात्सुखम् ॥ १२ ॥
यथा पश्य-- -- कं कंबुकं काचकामठी ।
तथायं विषयात्सौख्यं मिथ्यापथगमसौ ततः ॥ १३ ॥
यथा वा वह्निशांत्यर्थमिंधनं क्षिपति ध्रुवम् ।
तथा तृष्णाप्रशांत्यर्थमज्ञः स्याद्विषयोन्मुखः ॥ १४ ॥
अथवालमलं तेन पाठेन वृथा यतः ।
कुर्वतापि परादेशं निमग्ना स्वात्मनो हितम् ॥ १५ ॥
पश्यतापि पतता गर्ते मया किं तेन चक्षुषा ।
स्पृहता विषयादींश्च तत्किं ज्ञानेन मादृशाम् ॥ १६ ॥
जानतापि मयाकारि हिंसाकर्म महत्तरम् ।
तत्केवलं प्रमादाद्वा यद्दृष्टता यथामयम् ॥ १८ ॥
प्राण्यान्तेऽपि न हंतव्य* प्राणी कश्चिदिति श्रुतिः ।
मया प्राणसहस्राणि हता निर्दयचेतसा ॥ १९ ॥
आफलोदयमेवैतत्कृत कर्म शुभाशुभम् ।
भक्ष्यत नान्यथा कर्तुमाताप्योषिपतीनपि ॥ २० ॥

यत्स्फाटिको मणिः स्वच्छः समानादिति भासतः ।
सोऽप्युपाधिवशादत्र रक्तपीतादिको भवेत् ॥ २१ ॥
तथायं चिरस्वभावोऽपि जीवोऽतीन्द्रियसौख्यवान् ।
धत्ते नानाविनानात्मपदमुदयादिह कर्मणाम् ॥ २२ ॥
कुर्वन्नालापनामित्थमास्ते यावत्कुमारकः ।
संसक्तस्तावदुच्चैस्त्वं रत्नचूलादिभिर्नृपैः ॥ २३ ॥
अहो द्रव्याश्रयस्थाश्च गुणा निर्गुणलक्षणाः ।
अस्त्यनिर्वचनीयोऽयं गुणग्रामो गुणस्त्वयि ॥ २४ ॥
परस्पर परसाहाय्याश्रयोऽपि मदोद्धताः ।
असहायबलस्त्वत्तो निर्विण्णो विमतीभवन् ॥ २५ ॥
विना व्यूहद्रुमं कोऽत्र कश्चित् याति नम्रताम् ।
अत एवाहवः सौम्य का विभित्स्य धर्मं भजेत् ॥ २६ ॥
इत्यालापे मिथस्तेषां स्वामी रत्नशिखद्विषाम् ।
ऊचे गगनगत्याख्यो खगमाकम्पितं स्वतः ॥ २७ ॥
स्वामिन् जम्बूकुमार त्वं यावत्पुरेऽसि वीरहा ।
अनेनापि मृगाङ्केन कृतं तावत्स्वपौरुषम् ॥ २८ ॥
तत्केन वार्णितं स्वामिन् दृश्यते स्वपुरोऽधुना ।
पर वीरैरपि श्लाघ्यं श्रुतमप्यागतो मया ॥ २९ ॥
श्रुत्वा तस्मात्प्रकोपः स रत्नचूलोऽभवत् नृपः ।
असहिष्णुरतिक्रान्तो मिथ्यावादातिमारवः ॥ ३० ॥
न तत्पराभवान्मूढ दुःखमाप खगाधिपः ।
यन्मृगाङ्कवशस्तत्र मृगाङ्कबद्धसंभवात् ॥ ३१ ॥

उक्तञ्च—

"नागुणी गुणिनं वेत्ति गुणी गुणिषु मत्सरी ।
गुणी च गुणिरागी च विरलः कोऽप्यहो महान् ॥ ३२ ॥"

अहो व्योमगते धीमन् वक्तव्यं न मृषा वच ।
खपुष्पे रचित वन्ध्यासुतशेखरसन्निभम् ॥ ३३ ॥
स्वामिजम्बूकुमारेण केवलं निर्जितो बलः ।
अनन्येऽपि मदीयोऽस्य भवद्भुजविक्रमात् ॥ ३४ ॥
नाभविष्यदयं वीरश्चेत् संग्रामसंकटे ।
यदकरिष्याम्यहं नूनं तदग्रस्यस्त्वमंमसा ॥ ३५ ॥
कृत यत्नैस्त्वयैव विद्याराधनसाधने ।
पदातयोऽप्यलं हन्तुं त्वादृशा मामका अमी ॥ ३६ ॥
बलवानबले सज्जो ययागादुपहास्यताम् ।
चक्रिणापि हतो दीनो विलक्षो न तथापरः ॥ ३७ ॥
यथा वारिभिरस्त्रच्छिन्दी सायका निरवे दिवे ।
लाघवं माप लक्ष्मीऽपि मृतोऽपि न तथा खिन्न ॥ ३८ ॥
गौरवं किंच यदस्ति युष्मदादिषु सांप्रतम् ।
नष्टं न किंचिदद्यापि विद्यमानतयाऽनयोः ॥ ३९ ॥
तावत्तिष्ठत्कुमारोऽसौ मध्यस्थः कौतुकी यथा ।
साक्षात्कारीव युष्माभिर्युद्धमथ विधीयताम् ॥ ४० ॥
वाक्य रत्नसिख शृण्वन् मृगाङ्कस्तुकृप ध्रुवम् ।
मथिताऽग्नौ घनस्वर्णे घृते धूमध्वम न किम् ॥ ४१ ॥

१ मन । २ अमी ।

अस्त्वस्तु ममाणे यद्रत्नचूल स्वयांत्रियम् ।
रेन्नो (म्रः सछ) सस्यते यथा विशुद्दि स्यामिकापि मा ॥ ४२ ॥
यद्युनैव महायुद्धमायपोरुपितं पुन ।
विसर्ग मा कांसी (कार्षी॰) सामास्पिनङ्का मनसगर ॥ ४३ ॥
कावराणां विपिर्मेष स्वीकृतः सावसासिकः ।
महतां हि मतिडैव नियमो यावज्जीवनम् ॥ ४४ ॥
इति मियो वाचसंद्मास्स्याणां योद्धुं समुपवौ ।
कुमारस्तु यथास्थाने तस्यौ वार्षयमीव सः ॥ ४५ ॥
चिंतितं तत्कुमारेण किमत्र क्रियतेऽधुना ।
मूपार्दपोपचामान्यं माप्यस्य्यं मम संदरम् ॥ ४६ ॥
वारयामि मृगांकं चेतद्धस्यापि साधनम् ।
स्यायवत्त्वद्विपक्षोऽस्मि विपक्षो रत्नचूलकः ॥ ४७ ॥
रत्नचूडे निपितेऽभिभवम्य स्याच (भुगो) गौरवम् ।
स्वारमोत्कर्षं हि पुष्णाति विश्वस्यारापितो रिपुः ॥ ४८ ॥
अथानम्य कुमारं तं मन्यमानो यथा गुरुम् ।
रत्नचूडमृगांकौ द्वौ संसज्जौ भवता रण ॥ ४९ ॥
नेदुः संग्रामभेर्यश्च सन्नुस्तं दक्षवीर्दपा ।
समद्वास्ते भयाः सर्वे साभमाना रण पुनः ॥ ५० ॥
पूर्ववत्तुमुलं युद्धं चक्रुर्योऽपि सैनिकाः ।
दृष्ट्वा तं रौरवाकारं केचिन्मूर्च्छा गताः क्षणात् ॥ ५१ ॥
कश्चिद्वैर्यं समालम्ब्य कुर्वीत स्म महारवम् ।
भित्वे धर्मस्तस्येव पातयंतोऽरिर्मदसम् ॥ ५२ ॥

नागैस्तत्र हता नागा अश्ववारैर्निपादिन ।
असिकुन्तशरापातैः पङ्क्तयापि पदातिका ॥ ५३ ॥
कारयामासतुर्युद्धं साहंकारौ परस्परम् ।
रत्नचूडमृगांकौ द्वाविव रावणराघवौ ॥ ५४ ॥
शरासारैस्तदा युद्धं द्वाभ्यां कृतमिवाल्पणम् ।
न कोऽप्यत्र द्वयोमध्ये जितो वाथ पराजितः ॥ ५५ ॥
तत्क्रुद्धो रत्नचूडोऽसौ मायायुद्धमचीकरत् ।
मृगांकस्त्वल्पिपापाणि सावधानोऽभवत्तदा ॥ ५६ ॥
पांशुभिः सकलं सैन्यं स चक्रे व्याकुलं तदा ।
वायव्यास्त्रेण मृगांकोऽसौ ववाम सणतो रज ॥ ५७ ॥
अथ रत्नशिखेनाथैस्तदा वानमक्षीलेपा ।
मग्नासित मृगांकस्य सैन्य सर्वे क्षणादपि ॥ ५८ ॥
मृगांको जम्पूप्रूपा वामिषोपपदितस्ततः ।
इत्यादि सुचिर मोऽपि वैरिणा युयुध भृशम् ॥ ५९ ॥
नागपाशैस्तदा बद्ध्वा मृगांकं बलवत्तरः ।
रत्नचूड खगेशानो सतामदृपोऽभवत् ॥ ६० ॥
तताऽसौ विजयीभूत्वा बद्ध्वा त स्वर्वपने ।
कुवल्ले गेतुकामोऽपि वारितः स्वामिना मक्षम् ॥ ६१ ॥
रे रे मूढ क यासि त्वं नीत्वैन मृगलाञ्छनम् ।
मयि निपसि मूर्पीठ का हि क्षुमविक्रमः ॥ ६२ ॥
क क्षम क्षपमूर्द्धस्यमावातुं मणिमुपमम् ।
कालमपनमादिशात्मानं को वा माहु समीहते ॥ ६३ ॥

१ अर्णिता ।

पापिना या महामरं कथासयितुमिच्छति ।
त्यक्त्वा या सिद्धम्यायां कथाल्लाप सुख मभत् ॥ ६४ ॥
तथा त्वं मामविक्रम्य भद्रं यास्यसि सद्मनि ।
इत्थमेव मदधिर्मं व्रीडया नावृतो यतः ॥ ६५ ॥
यदस्यैवं कुमारेऽस्मिन् जम्बूस्वामिनि सगरे ।
सन्मुखीभूय सन्तस्थौ यावद् रत्नशिखस्तदा ॥ ६६ ॥
अथोवाच कुमारोऽसौ रत्नचूडं खगं प्रति ।
आवाभ्यां केवलं युद्धं विधेयं क्रियतापरैः ॥ ६७ ॥
तत सर्वान्समुत्सार्य सैनिकांश्च महामयान् ।
द्वावेव तस्थतुः सज्जौ कर्तुं संग्राममुद्यतौ ॥ ६८ ॥
ततो युद्धमभूद्घोर द्वयोः खसैन दारुणैः ।
नानाविधैर्महावीरैरन्योन्यं जयकांक्षिणोः ॥ ६९ ॥
मुमोच रत्नचूडोऽसौ नागास्त्रं स्वामिनं प्रति ।
न्यक्कृतं तत्कुमारेण गारुडास्त्रेण तत्क्षणात् ॥ ७० ॥
पुनः कोपोपरक्तः सन्नग्निबाणं ससर्ज सः ।
प्रशशाम तदा वेगात्कुमारो जलधारिभिः ॥ ७१ ॥
पुनस्तोमरपातेन हतो रत्नशिखो यदा ।
तदा हंतुं कुमारं स चक्रं जग्राह बाहुना ॥ ७२ ॥
यावन्मोक्तुं न शक्नोति चक्रं रत्नशिखः खगः ।
तावद्वेगात्कुमारेण छिन्नौ बाणा भयाद्रिपो ॥ ७३ ॥
तेन बाणेन तच्चक्रं खंडितं तीक्ष्णहेतिना ।
न्यपतत्पद्मः खेऽपि विद्युत्पातादिव द्रुतम् ॥ ७४ ॥

तदावाघूर्णमानांगं नागं वीक्ष्य खगेश्वरः ।
मृगांकमवतारासौ कुंतहस्तश्च कोपवान् ॥ ७५ ॥
तावज्जम्बूकुमारेण क्षणादुत्थीय दंतिन ।
हत्वा मुष्टिप्रहारेण पातितः पृथिवीतले ॥ ७६ ॥
त्यक्तमानधनः सोऽपि नीतश्चारोप्य दंतिनि ।
रत्नचूलः कुमारेण बद्धाबद्धा खगाधिराट् ॥ ७७ ॥
तदसौ शुशुभे तूर्णं मृगांकं बंधनाच्छपात् ।
व्यभ्रे व्योम्नि शरत्काले यथादित्यो घनात्यये ॥ ७८ ॥
पुष्पवृष्टिं सुरास्तेनुः कुमारजयशंसिनः ।
दिशो दुंदुभिनादेन पूरयंतो नभोंगण ॥ ७९ ॥
बभ्रुर्जयजयारावं सर्वे ते मित्रवादयः ।
अहो पुण्यद्रुमात्स्वादु फलं सर्वा हि संपदः ॥ ८० ॥
अथ प्रवेशयामासुः कुमारं केरलां प्रति ।
शौर्यविक्रमदानाद्यैर्मृगांकाद्यक्षितीश्वरा ॥ ८१ ॥
यदाप परमानंदं खगा व्योमगतिस्तदा ।
स्तोतुं न शक्यते सर्वो निरनक्षपवया यथा ॥ ८२ ॥
अथ पौरस्त्रियस्तत्र पीनस्तनभरानताः ।
चिक्षिपुः सुमनान्पुंजैः कुमारमनुरागतः ॥ ८३ ॥
काश्चित्पौरांगनास्तत्र जजल्पुश्च परस्परम् ।
काश्चिन्मंगलगीर्तिं गायंति स्म मुदान्विता ॥ ८४ ॥
सखे दर्शय मामाशु नाम्ना जम्बूकुमारकम् ।
हेलया निर्जिता येन रत्नचूलखगाधिप ॥ ८५ ॥

काचिद्वदति धन्योऽयं श्रीपार्श्वस्तत्र जयी ।
अस्माकं येन सौभाग्यं रक्षितं निघ्नता रिपून् ॥ ८६ ॥
धन्या जिनमती धन्या सार्थवाहस्य भामिनी ।
दशमासान् यया गर्भे धृतोऽयं सिंहविक्रमः ॥ ८७ ॥
धन्यः स श्रेणिको भूपो यस्यैतादृगमयीषम ।
एकोऽप्यर्कं सहस्राणां भटानां मानहानये ॥ ८८ ॥
अथ्यापथमहावीथ्यां श्रीमां वणिक्सुतैः कृताम् ।
पश्यन् स्वामी व्रजायाशु तोरणं नृपमन्दिरः ॥ ८९ ॥
तत्र श्रीमातिशायितं निबद्धं मणिमौक्तिकैः ।
दर्शं दर्शं कुमारोऽसौ क्षणं तस्थौ स कौतुकी ॥ ९० ॥
ततः शनैः शनैर्गच्छन् प्रविष्टो नृपमंदिरे ।
आलम्बन् जगदानंद सौन्दर्य (र्य) सुधांशुभिः ॥ ९१ ॥
नीत्वा तत्र मृगांकस्तं क्रियां सन्मज्जनादिकाम् ।
वर्धितो हासयन्नेके मभयाद्दीतमत्सर ॥ ९२ ॥
सर्व यत्रसवस्त्रोऽस्य मृदुस्निग्धं सुखासनम् ।
मृगांकोऽप्यर्पयामास सुखाय स्वामिनः पुरः ॥ ९३ ॥
भुक्तं जम्बूकुमारेण नानाव्यञ्जनसंस्कृतम् ।
भोजनं स्वादु संमिष्टं पूर्णं पुण्यफलादिवत् ॥ ९४ ॥
तत कर्पूरताम्बूलैर्मृगमदादिद्रवैरपि ।
अर्चितोऽसौ मृगांकेण प्रीत्या सत्कारगौरवात् ॥ ९५ ॥
अथ मर्त्यसभे स्थित्वा कुमार[1] करुणापर[2] ।
कारामया सभासार्धं रत्नचूलं सगौरवम् ॥ ९६ ॥

१ तोऽस्थेऽसौ पठितुम् पुस्तक. । २ रचितम् ।

अपि च कोमलालापैः सूक्तिसंदर्भगर्भितैः ।
खगं संतोषयामास कुमारो मारगौरवः ॥ ९७ ॥
जयपराजयौ स्यातां कुर्वतां युद्धमाहवे ।
विषादं खग मा कार्षीर्धर्मं पुंसां निसर्गतः ॥ ९८ ॥
गच्छ गच्छ यथास्थानं स्वसैन्यमपि निर्भयात् ।
वर्तितव्यं परीवारैः स्वीयैः स्वीयपुरालये ॥ ९९ ॥
अथावादीद्रत्नचूलोऽपि कुमारं प्रति मार्दवात् ।
स्वामिन् गत्वा त्वया सार्धं द्रष्टुमिच्छामि श्रेणिकम् ॥ १०० ॥
स्थित्वा तत्र कुमारेण केषुचिद्वासरेषु च ।
ततो विमानमारुह्य प्रस्थितः श्रेणिकं प्रति ॥ १०१ ॥
अत्रान्तरेऽस्मिन् मृगाङ्कोऽपि प्रतस्थे सकलाङ्गकः ।
आदायोद्वाहितुं कन्यां तां विलासवतीं सतीम् ॥ १०२ ॥
तया सार्धं समादाय रत्नचूलोऽपि भक्तिमान् ।
चलति स्म विमानैः स्वैरमा पंचशतैः शुभैः ॥ १०३ ॥
खगो गगनगत्याख्यो मुदा निर्भरमानसः ।
अन्वगात्स कुमारं तं स्वविमानमधिष्ठितः ॥ १०४ ॥
अलंचक्रुर्दिशां चक्रं विमानैर्व्योमगा इमे ।
किमेतदिति भूपालैराकुलं वीक्षितं भयात् ॥ १०५ ॥
ते सर्वे सकुमाराश्च संसिद्धैः पुरमापसम् ।
यत्रास्ति श्रेणिको भूपो राजमण्डलवेष्टितः ॥ १०६ ॥
अथोत्तीर्य विमानानि स्थापयित्वा नभोङ्गणे ।
आनताः श्रेणिकं सर्वे ते मृगाङ्कादयः खगाः ॥ १०७ ॥

१ मष्ट ।

श्रेणिकोऽपि ततस्तूर्णं समुत्थाय निजासनात् ।
आलिलिंग कुमारं तमुत्सुकः परमादरात् ॥ १०८ ॥
साधु साधु मया दृष्टो यचिरादपि मा भवन् ।
त्वयि दृष्टे महान् हर्षो जातो मे हृदि संप्रति ॥ १०९ ॥
ततो गगनगत्याख्यस्तद्वृत्तान्तमथीकथत् ।
यथाश्रुतं द्वयोरेव तथया श्रेणिकं प्रति ॥ ११० ॥
ततोऽसौ दर्शयामास संज्ञया हस्तसंज्ञया ।
तत्संग्रामविधिर्दृष्टं वा तं तं व्योमगतिः खगम् ॥ १११ ॥
एष देव मृगाङ्कोऽयं दृष्टो स तनयां निजाम् ।
एषास्य महती भार्या नाम्ना स्यात्मालतीलता ॥ ११२ ॥
एष रत्नचिलो नाम्ना ख्यातो विद्याधराग्रणीः ।
निर्जितो यः कुमारेण दुर्जयो महतामपि ॥ ११३ ॥
श्रुत्वेवं तन्मुखाम्भोजा स लेभे निर्वृतिं पराम् ।
यथा चन्द्रोदयं सिन्धुर्वृद्धिमाप महौजसा ॥ ११४ ॥
स्तुतिं चक्रे कुमारस्य श्रेणिकश्च मुहुर्मुहुः ।
निसर्गात्स्वदुमापित्वं राशि स्वपकर्ता न किम् ॥ ११५ ॥
परिणीताय मृगाङ्कस्य तनया सा वरांचिता ।
या विशालवती नाम्ना श्रेणिकस्य कृतार्पिता ॥ ११६ ॥
ततश्चोद्वहकल्याणे नृत्यं तेनुः खगेश्वराः ।
कामिन्यो गजगामिन्यो गायंति स्म सर्मगलम् ॥ ११७ ॥
मैत्रीभावो द्वयोश्चापि रत्नचूलमृगाङ्कयोः ।
मिथः कारापितस्तेन श्रेणिकेन महौजसा ॥ ११८ ॥

वकपंक्तिं निरीक्षस्व सरस्तीरेषु सुंदरि ।
त्वत्कण्ठालम्बिनी माला यथा (सु) स्वमनसां त्वयि ॥ १३० ॥
इतश्चक्रयुगं पश्य चकाराक्षि वियुक्तवाम् ।
गतं त्वद्वदनं वीक्ष्य चन्द्रोदयविशङ्कया ॥ १३१ ॥
चातकध्वनिमाराद्वै शृणु कोशानुकारिणीम् ।
रटन्तं परमप्रीत्या बहुशोऽपि प्रिये प्रिय ॥ १३२ ॥
मञ्जरीं पिंजरां पश्य सुभ्रु पुष्पकुमावलीम् ।
तव कर्णावतंसाभ्यां स्पर्धमानां सुपौरकैः ॥ १३३ ॥
शुभ्रमद्विरफवंशानि पश्य पश्य वनान्तरे ।
त्वद्गुणस्तोमरूपाणि लिखितान्यक्षराणि वै ॥ १३४ ॥
दूरादवदां वन पश्य कलिकाकारवाकुलम् ।
सैमारमन्मथाकीर्णे पुन्नागमुकुलच्छया ॥ १३५ ॥
इतः पश्य सरोमालिं प्रफुल्लेन्दीवरानन ।
क्षाममानां द्विरेफैश्च त्वदाननविलासया ॥ १३६ ॥
अयि पद्मभिवर्णी मद्गीमक्षमाचरतां नय ।
त्वन्मुखकरसंस्पर्शो कुर्वती त्वदधैरिति ॥ १३७ ॥
कांठे कांतिसुपर्णतान् पश्य सुमनसां चयान् ।
त्वन्मुखसामोदमादाय वमतः प्रियमुत्तमाम् ॥ १३८ ॥
इतिप्रभृतिभागानां क्षामां सत्यप्रयमयम् ।
मिथाय भणितो भूप माप राजगृहं पुरम् ॥ १३९ ॥
तत्राप्युपवने धीमान् क्षण तस्थौ ससैनिकः ।
तत्रार्य मुनिं नाम्ना सौधर्मं धर्मवत्सलम् ॥ १४० ॥

१ केचन वृत्ती मधूकस्य ।

# अथ सप्तमं पर्व ।

भवतु भावशुद्ध्यर्थं स्वभावो भवहानये ।
धर्मे धर्मफले रागस्तव श्रीसाधुधीश्वर ॥ १ ॥ इत्याशीर्वादः ।

धर्मनाथं स्तुवे धर्मतीर्थेश धर्मसिद्धये ।
शांतिनाथं पुनर्नौमि शांतये घातिकर्मणाम् ॥ १ ॥

अथ जम्बूकुमारेण चिंतितं निजमानसे ।
कुतः पुण्योदयादेतन्मया लब्धं यशोधनम् ॥ २ ॥

तत्सर्वं भगधार्तमध्ये समागतौ मुनिसन्निधौ ।
तं प्रणम्यापविष्टश्च विनयावनताननः ॥ ३ ॥
भो मुने कृपया किंचिद्ब्रूहि मे संशयच्छिदे ।
कोऽयं कुतः समायातः कस्मात्पुण्यविपाकतः ॥ ४ ॥
जन्मांतरस्य वृत्तांतं ज्ञातुमिच्छामि त्वन्मुखात् ।
त्वमुपेक्षापरः स्वामिन् निस्पृहः सुखदुःखयोः ॥ ५ ॥
शत्रौ मित्रे समानस्त्वं जीवने मरणे समः ।
स्तुतिनिंदासमः सौम्यो वास्यां वा हरिचंदने ॥ ६ ॥
त्वं निस्तारी भवाम्भोधौ मुने भव्यवत्सलः ।
जीवन्मुक्तस्त्वमेवासि कृपालुः सर्वजन्तुषु ॥ ७ ॥
अथोवाच मुनिर्नाम्ना सौधर्मो धर्मदीपकः ।
शृणु वत्स यदेतेऽ(ऽ)त्र वृत्तांतं पूर्वजन्मनः ॥ ८ ॥

भूपतिस्तत्र नाम्नापि सुप्रतिष्ठ' प्रतिष्ठया ।
जैनधर्मसरोहंसो धुरीणस्तु धर्मकर्मणाम् ॥ २० ॥
भार्या रूपवती तस्य नाम्ना धर्मसमन्विता ।
पट्टबद्धा सुशीलाख्या सौन्दर्यगुणशालिनी ॥ २१ ॥
भवदेवचरो ज्यायान् योऽथ भूत्वाऽमरो दिवि ।
च्युत्वा सागरचंद्रश्च सोऽथ तस्य सुतोऽजनि ॥ २२ ॥
सौधर्म इति नाम्नापि राज्ञः स्यातः स बंधुना ।
क्रमाद्वृद्धिं समासाद्य जातो निःशेषशास्त्रवित् ॥ २३ ॥
कुमारावस्थया यावत्तिष्ठत्यसौ कुलदीपकः ।
अथान्येद्युः स धर्मात्मा सुप्रतिष्ठः कलत्रयुक् ॥ २४ ॥
समवादिस्थितिं भूमिं गत्वा वीरस्य वंदितुम् ।
वर्द्धमानमुखाम्भोजात् श्रुत्वा धर्मोपदेशनाम् ।
सद्योत्पन्ननिर्वेदो भोगेभ्यश्च पराङ्मुखः ॥ २५ ॥
भावयामास स चित्ते संसारासारतां घनाम् ।
क्षणिकत्वादिनादीनां वारिबुद्बुदसन्निभाम् ॥ २६ ॥
दीक्षां जग्राह नैर्ग्रंथी स्वर्गमुक्तिसुखप्रदाम् ।
सर्वसंगविमुक्तात्मा हानये चाष्टकर्मणाम् ॥ २७ ॥
दिवसैः कतिभिर्भिक्षुः श्रुतपूर्णोऽभवन्मुनिः ।
गणधरस्तुर्यो जातो वर्द्धमानजिनेशिनः ॥ २८ ॥
सौधर्मोऽपि तथा धर्माद्वीक्ष्य तं गणनायकम् ।
आत्तमार्गनिर्वेद' प्रवव्राज महामुनि' ॥ २९ ॥
क्रमात्सोऽप्यभवत्तस्य पंचमो गणनायकः ।
सोऽयं सुधर्मनामा स्यां भवद्गात्रधराऽधुना ॥ ३० ॥

अवस्थेयं क्व ते वत्स वयोलीलानुसारिणी ।
क्वेदं दीक्षाभरं सौम्य दुर्द्धरं महतामपि ॥ ४२ ॥
अथ चेत्सर्वथास्था वर्तते तव चेतसि ।
एकशः स्वगृहे गत्वा कुरु कृत्यं यथोचितम् ॥ ४३ ॥
बंधुवर्गं समाहूय समापृच्छ्याथ गौरवात् ।
समाधानतया कृत्वा क्षंतव्यं च परस्परम् ॥ ४४ ॥
पश्चाद्गृहाण नैर्ग्रन्थीं दीक्षां कर्मक्षयंकराम् ।
एष क्रमः समाम्नायात्स्वीकृतः पूर्वसूरिभिः ॥ ४५ ॥
श्रुत्वा जम्बूकुमारोऽसौ प्रोक्तं सौधर्मधारिणा ।
चिंतयामास स्वे चित्ते किं कर्तव्यं मयाधुना ॥ ४६ ॥
चेत्सद्मनि न गच्छेयमहं स्यात्सहठाग्रह ।
गुरोराज्ञाविलोपः स्यात्स न श्रेयस्करः स्वतः ॥ ४७ ॥
तथाऽवश्यं हि गंतव्यं मया स्वात्मालयं क्षणात् ।
पश्चादागत्य दीक्षां तां ग्रहीष्यामि तपोन्विताम् ॥ ४८ ॥
निश्चित्येतन्नमस्कृत्य गुरुं सौधर्मसंज्ञकम् ।
जम्बूस्वामिकुमारोऽसौ जगामाशु निजालयम् ॥ ४९ ॥
गत्वाथ त्वरितं तत्र वार्तां जिनमतीं प्रति ।
निश्चयतः स्वचित्तस्थां सर्वां तामप्यचीकथत् ॥ ५० ॥
मातर्नूनं विजानीहि निर्विण्णोऽहं यथास्थिति ।
इतः पाणिग्रहाचारं कर्तव्यं मयका ( हि मया ) भुवि ॥ ५१ ॥
चकंपे श्रुतमात्रेण माता जिनमती सती ।
पवनेनेरिता वेगाद्धिमग्रस्तेव पद्मिनी ॥ ५२ ॥

अहो पुत्र किमाख्यात वज्रसंपातनिष्ठुरम् ।
कारणं किमकस्मात्स्यादत्र कार्यनिदर्शने ॥ ५३ ॥
अथोत्तरप्रदानेन समाधानचिकीर्षया ।
कथितानि कुमारेण मुनिवाक्यानि तानि वै ॥ ५४ ॥
श्रुत्वा जिनमती तस्मात्तच्चोत्तरवार्तिकम् ।
धर्मबुद्धितया किंचित्समाधानमुपाददे ॥ ५५ ॥
साऽर्हद्दासाग्रतः सर्वं वृत्तांतं गदति स्म वै ।
चरमांगी कुमारोऽयं जैनीं दीक्षां जिघृक्षति ॥ ५६ ॥
अर्हद्दासो विश्रम्यैतन्मूर्छामाप क्षणादिति ।
महामोहोदयादेव हाहाकारं रटन्निति ॥ ५७ ॥
ततः कथंचित्सोपायैरुत्थितोऽपि वणिक्पतिः ।
विललाप यथात्यर्थं तथा को वर्णयेत्कविः ॥ ५८ ॥
अर्हद्दासेन तत्रैव कश्चिद्वाग्मी विचक्षणः ।
प्रेषितस्तत्कथां वक्तुं सागरदत्तादिसद्मनि ॥ ५९ ॥
आदिष्टस्त्वरितं गत्वा स सदेवोत्तरः सुधीः ।
सर्वं निवेदयामास यथासर्वसमक्षकम् ॥ ६० ॥
अहो दुर्दैवमस्माकं यदुत्पन्नमसज्जनाः ।
माताप्यापि धनमाला विप्रकर्मोदयादिह ॥ ६१ ॥
आकर्ण्येदं वचस्तीक्ष्णं दुःसहं वज्रपातवत् ।
भीतिनस्तु महाभीतेश्चत्वारोऽपि चकंपिरे ॥ ६२ ॥
दधंति स्म शुचाक्रांताः क्षणं विस्मितमानसाः ।
किमन्यत्र कुमारोऽप्यद्भुतं कर्तुमिच्छति ॥ ६३ ॥

१ दूतः ।

तावत्स एव संपृष्टः[1] श्रेष्ठिभिस्तैर्महाग्रहैः ।
यत्र सौम्य यथास्तथ्यं कारणं किमिहात्र भोः ॥ ६४ ॥
स संदेहहराश्चाशीर्वादपूर्वतरया गिरा ।
अहो स्वामिकुमारोऽयं तितीर्षुर्भववारिधिं ॥ ६५ ॥
निश्चयात्कामभोगेभ्यो निस्पृहो दुःखभीरुकः ।
सस्पृहो मुक्तिकामिन्यां जैनीं दीक्षां ग्रहीष्यति ॥ ६६ ॥
श्रुत्वा तं वणिजो नाथाः सपाङ्कसतां गताः ।
यामपिहुं स्वकन्यास्ता यमुष्मांत्राभिजातकम् ॥ ६७ ॥
तत्र गत्वा समाहूय भीताम्बाप्यनुवासितुम् ।
ताः कन्याः कुलशीलत्वं न प्राहुर्लेशतस्त्रिया ॥ ६८ ॥
शृणु भो जम्बूकुमारोऽयं श्रूयते भोगनिस्पृहः ।
व्रतान्यादातुमीहेत तपःपूर्वाणि मुक्तये ॥ ६९ ॥
तद्वदस्तु यथाकामं का नो हानिस्तु सांप्रतम् ।
भवतीनां समुद्वाहे भमैवाय वरोऽपरः ॥ ७० ॥
निशम्यैतत्पितुर्वाक्यं पद्मश्रीः कुपिता तदा ।
ममाग्रहाद्धा कर्णपिदे माभिहस्येव योगिराट् ॥ ७१ ॥
तात मा वद दुर्वाक्यमेतन्नीचाक्षरं मयि ।
प्राणान्तेऽपि न कर्तव्या क्रमहानिर्महात्मभिः ॥ ७२ ॥
एक एव यथा देवः सर्वदोषविवर्जितः ।
अर्हन्निति त(स)दास्थातो धर्मैको महात्मनाम् ॥ ७३ ॥
तथा जम्बूकुमारोऽयं भर्ता मेऽस्तु हि मामकः ।
नापरः कश्चिदेवासौ नियमो मे निसर्गतः ॥ ७४ ॥

१ किशो एष्ठी । २ कमाशिवर्जं ।

धिग्भोगान्विषयोत्थानिन्द्रजालोपमानिह ।
पतौ गच्छति दीक्षायै वयं सुपथगौ रता ॥ ७५ ॥
अथ पेन्द्राविनी सेयं सागरसंपदनीदक्षी ।
अस्माकं भाग्यसंयोगादयं स्वास्यति सद्मनि ॥ ७६ ॥
यदि भोगान्तरायस्य कर्मणो मे विपाकतः ।
नारितो बहुधोपायैरयं गता तपोवने ॥ ७७ ॥
तदापि न मनस्तापो भविता मे सुनिश्चयात् ।
नान्यथा स्वक्ष्यते कर्तुं यद्भाव्यं तद्भविष्यति ॥ ७८ ॥
अलमत्र बहूक्तेन तात वाचयमी भव ।
सर्वथा पतिरेको मे जम्बूस्वामिकुमारकः ॥ ७९ ॥
श्रुत्वा सागरदत्तास्य श्रेष्ठी शुभवचस्ततिम् ।
सर्वं निवेदयामास स संदेशहरे मति ॥ ८० ॥
श्रुत्वा वचोहरश्चापि गत्वा श्रेष्ठिनिवासकं ।
जगाद सर्वतस्तत्त्वं यथा कन्याकथानकम् ॥ ८१ ॥
अथ चाहद्दासो गच्छन् मातुरस्ताचर्क मितः ।
अहो न क्षमका द्रष्टुं संतः परविपत्तयः ॥ ८२ ॥
इति कर्तव्यतामूढः सोऽर्हद्दासो वणिक्पतिः ।
गत्वा प्रति कुमारं स विज्ञप्तिमकरोत्कृती ॥ ८३ ॥
एकमेव दिनं वत्स विवाहानंतरं तव ।
त्वया ताभिः सहास्थानं कर्तव्यं नैकशः किल ॥ ८४ ॥
मामकीं प्रार्थनां शुभ मामोघां विधेहि भो ।
पश्चाद्यद्रोचते तुभ्यं तत्तथा विधीयताम् ॥ ८५ ॥

निरीहोऽपि कुमारः स पितुरत्याग्रहात्तदा ।
तथेत्युवाच तात त्वं मा विषादीः स्वचेतसि ॥ ८६ ॥
ततो मांगल्यतूर्याणि पचानां श्रेष्ठिनां गृहे ।
नेदुरानंदभेर्यश्च पूरिताशामुखा जवात् ॥ ८७ ॥
कलगीतानि कामिन्यो गायंति स्म मुदान्विताः ।
संभ्रमन्मृगनेत्रास्ताः पीनोन्नतपयोधराः ॥ ८८ ॥
उद्वाहोचितसामग्री या काचन प्रसिद्धितः ।
तया सह यथाशास्त्रमध्यास्त कुमारकः ॥ ८९ ॥
ध्वनद्भिर्घोषसंघैश्च वंदिवृंदैः सुमञ्चकैः ।
पठद्भिस्तद्यशोध्यानं नृत्यद्भिर्नर्तकीजनैः ॥ ९० ॥
पौरांगनादिसल्लोकैर्वीक्ष्यमाणः पदे पदे ।
प्राप जम्बूकुमारश्च सार्थवाहस्य सद्मनि ॥ ९१ ॥
उत्तीर्य तुरगात्तूर्णमुपविष्टश्चतुष्किकाम् ।
मघगंभीरनिस्वानो धीरो मंदरकूटवत् ॥ ९२ ॥
अथानीताभिरत्यर्थमुद्वाहस्य कृते कृती ।
करग्रहमनिच्छोऽपि मेघश्रीप्रमुखासु हि ॥ ९३ ॥
विवाहानंतरं सर्वे स्वर्णरत्नादिभाजनम् ।
दत्तं सागरदत्ताद्यैर्दानीयं यद्गृहोचितम् ॥ ९४ ॥
पट्टकूलानि श्लक्ष्णानि विविधानि वि ( च ) त्राणि च ।
परार्ध्याद्दुहिता (तृ) भ्यो मणिमुक्ताप्रवालकान् ॥ ९५ ॥
सत्कर्पूरसुगंधीनि कुंकुमार्दीनि सन्मुद ।
पर्यंकासनयानादिवस्तूनि वणिजो ददुः ॥ ९६ ॥

हस्त्यश्वधनधान्यादिदासीदासादिकं तथा ।
यदुत्तमं गृहे किंचित्तत्सर्वं स्वामिने ददुः ॥ ९७ ॥
तदादाय स कन्याभिः संबद्धवसनाञ्चलः ।
रजन्यां सहकांताभिर्नानाविधमहोत्सवैः ॥ ९८ ॥
पठद्भिर्बंदिवृंदैश्च नृत्यद्भिर्नर्तकीजनैः ।
मर्हावासगृहे प्राप स्वामिजम्बूकुमारकः ॥ ९९ ॥
यच्चप्राप्युचितं किंचित्प्रासंगिकमुत्तमम् ।
तत्सर्वं विनयान्नूनमर्हावासाऽप्युपाददे ॥ १०० ॥
यः कश्चित्तत्र दानीया सोऽपि दानेन प्रीणितः ।
प्रभवार्होऽपि यः कश्चित्सत्कृत स तथा किल ॥ १०१ ॥
जिनमत्यापि सोत्साहात्स्वगेभ्यो बहुमानिता ।
यथास्वं पट्टकूलादि ताभ्यो दत्तं स्वभक्तितः ॥ १०२ ॥
सन्मानिताश्च ते सर्वे ( ताः सर्वाः ) प्राप्ता निजनिजगृहम् ।
निद्राघूर्मि (र्मि) तनयाश्च बभूवुः शयनोद्यता ॥ १०३ ॥
सह ताभिः कुमारश्च रहस्यकक्ष मंदिरं ।
स्थापितस्तु वयस्यालीजनैः सस्मितभाषणैः ॥ १०४ ॥
अथ ज्वलत्सु दीपेषु दीपितावासवस्तुषु ।
हंसतूलास्यशय्यायां स्थितस्ताभिः सहासकौ ॥ १०५ ॥
तत्र प्रार्थयमानाशु तस्थौ स्वामी विरक्तितः ।
संस्थितश्चापि तन्मध्ये पद्मपत्रं जले यथा ॥ १०६ ॥
नापि वक्ति न पश्यश्च सुरूपास्वपि तासु च ।
स्थितः स्थिरतरः स्वामी निस्तरंगसमुद्रवत् ॥ १०७ ॥

१ गरिष्ठं शोभितः । २ सखीजनैः ।

कृतपरिणयकर्मा धर्ममूर्तिर्विरक्ता
विषयविरतचेताः स्यात्समासन्नभव्य ॥ ११८ ॥

इति श्रीजम्बूस्वामिचरित्रे भगवत्श्रीपश्चिमतीर्थंकरोपदेशानुसारित स्याद्वादानवद्यगद्यपद्यविद्याविशारदपण्डितराजमल्लविरचिते साधु पासाह्मजसाधुटोडरसमभ्यर्थिते जम्बूस्वामिपरिणय-नोत्सववर्णनो नाम नवम पर्व ।

## अथ दशम पर्व ।



भपस्याराधिता सम्यग्भारती परमेष्ठिनां ।
साधुपासांगमस्यास्य भवेत् साधुभवच्छिदे' ॥१॥ इत्याशीर्वादः ।

कुर्युं कुम्भादिसदृशं पदतीर्थावभासकम् ।
अरं चारित्रिनाशाय वंदे मुक्तिवधूवरम् ॥ १ ॥
अथ तासां वतभ्रूणां दृष्ट्वा चंचुविचेष्टिताम् ।
निर्विद्य विद्वांवर्यो जम्बूस्वामी तदर्थकृत् ॥ २ ॥
हा धिगज्ञानमेवैतन्मोहकर्मोदयादिह ।
यत्प्रभावात्तु मन्यंते जीवा दुःखं हि सौख्यवत् ॥ ३ ॥
यथा मरीचिकां पातुं मृगा धावंति वार्धिया ।
तथा प्राणिगणाश्चापि भिच्छोद्भूतार्थकं सुखम् ॥ ४ ॥
यथा कंडूयनं कुर्वन्नातुरो नखरैः खरैः ।
अजानन् स्वस्वदुःखौघं मनुते हि परं वरम् ॥ ५ ॥
तत्सौख्यं यन्निराबाधं सार्वाः स्वात्मसमुत्थय ।
निर्विपक्षमथा नित्यमव्याबाधमतीन्द्रियम् ॥ ६ ॥
इदं स्वास्थ्यं सुखाभासं परं बाधापुरःसरम् ।
बंधहेतुरनित्यं च तद्धेयं हि महात्मभिः ॥ ७ ॥

---

१ सपरं बाधासहियं विच्छिण्णं बंधकारणं विसमं ।
जं इंदिएहिं लद्धं तं सोक्खं दुक्खमेव तहा ॥
इति प्राकृतश्लोकः ।

माया(त्मा)नवमजानानो जनः महापरावत ।
विषयेषु समासक्तः सुखं वदति मूढधीः ॥ ८ ॥
किं चास्मिन्सुखे मग्नो जीवो मज्जति दुर्गतौ ।
योषित्पाशैर्दृढं बद्धो यथा वागुरया मृगः ॥ ९ ॥
आशीर्विषं वदन्त्यन्ये दंदशूकविशेषकम् ।
वृथा वै तदहं मन्ये वदयो योषिदञ्जसा ॥ १० ॥
यासामर्धविलोकैश्च दह्यन्ते हि कामुकाः ।
ज्वलत्कामाग्निना दग्धाः शरापातैर्मृगा इव ॥ ११ ॥
असारेऽपि वधूकाये मोमुह्यन्ते शठाः कथम् ।
त्यक्त्वातीन्द्रियसौख्यं हि सीदति वत दुर्मदा ॥ १२ ॥
यदत्र गर्हितं किंचित्तत्सर्वं स्त्रीकुटीरके ।
सर्वोमूत्रासृङ्मांससंभूत कीकसोच्चये ॥ १३ ॥
सुंदरं चापि यद्वस्तु पूत वा यन्निसर्गतः ।
वपुःसंसर्गतो नूनं याति दुर्गन्धतां क्षणात् ॥ १४ ॥
आलकोलाहलेनासमिमाः सर्वाश्च योषितः ।
मन्ये प्राणिविघाताय धात्रा पाशा विनिर्मिताः ॥ १५ ॥
एवं संचिन्तयन्नास्ते यावत्स्वामी स्वचेतसि ।
तावत्प्रोवाच पद्मश्रीस्तास्वित्सोऽपि वधूः मति ॥ १६ ॥
नाथोऽस्मिन् निर्गुणे पुंसि किं कृतेनापि चाटुना ।
बाणाः कुर्वन्ति किं पीडे मन्मथस्यापि सर्वज्ञ ॥ १७ ॥

---

१ अपिधि भार्या वा विषमस्येति विषधर सर्पः ।
गर्हितं दधति इति वैरदधः दधः । ३ पुरीषं ।

यथापि नर्तनेनापि गानेन बधिरं न हि ।
कातरं किं कृपाणेन किं लक्ष्म्या कृपणं वृथा ॥ १८ ॥
सर्वं सर्पासकारीव वर्तते प्रार्थ्यमानयम् ।
प्राप्तं तपःफलं त्यक्त्वा पुनः कर्तुं समीहसे ॥ १९ ॥
यथा कश्चिन्नरो मूर्खः सिद्धमन्नं स्वसद्मनि ।
त्यक्त्वाज्ञानात्प्रमादाद्वा भिक्षुर्भिक्षामटत्यहो ॥ २० ॥
तपसां हि फलं सौम्य तत्स्वर्गो वा महीतले ।
प्राप्तं चापि न जानाति नूनमभ्यस्तता जडः ॥ २१ ॥
वयं रंभासमा नाथ सर्वं तत्स्वर्गसन्निभम् ।
वपुर्दिव्यं गृहे संपद् दुर्लभं किमतः परम् ॥ २२ ॥
सर्वं स्वाधीनमुत्सृज्य तपः कर्तुं समीहसे ।
तव सा प्राप्स्यते नो वा विचारार्हस्त्वयम् ॥ २३ ॥
सख्यः कथानकं चैकं रम्यं वर्णितभूमिगम् ।
सावधानतया श्राव्यं युष्माभिर्भव्यमस्ति यदि ॥ २४ ॥
शृण्वंति स्म च तास्तिस्रो सामर्ष्याः सकुमारकाः ।
गंभीरवदस्सौम्या घनश्चकथानकम् ॥ २५ ॥
यथात्र हौमिकः कश्चिद्धनदत्ता नाम्नाप्यभूत् ।
तस्य भार्या धनानाम्नी वर्तते स्म मुदान्विता ॥ २६ ॥
तयोर्जातः सुतश्चैको नाम्ना वै सर्वको वशी ।
अप्येककार्की स निष्णातो गृहकार्ये समः शमी ॥ २७ ॥
अथ दैववशात्तस्य हालिकस्य मृता वधूः ।
सरूपा सस्मीपया स्मार्ते दहनाशमपक्षणात् ॥ २८ ॥

१ हौमिकः जाति इति पर्यायेऽपि सर्वत्र ।

हालिकेन ततः पश्चादुद्वाह्याशु सुतं परम् ।
परिणीता परा स्वस्मै वृद्धेनापि सकामिना ॥ २९ ॥
षोडशाब्दमिता सेयं षष्टिवर्षमितः स्वयम् ।
तया सार्द्धं रतिक्रीडां कुर्वन्नास्ते स कामुकः ॥ ३० ॥
अथाऽन्येद्युर्निर्भीय सा कामुकी कामिना सह ।
कथंचित्प्रणयकोपाज्जाता मानमधिष्ठिता ॥ ३१ ॥
ततोऽनुनेतुकामोऽसौ स्वप्रियां तां प्रसादयन् ।
उवाच हालिकः कामी चाटुवाक्यं वचामिति ॥ ३२ ॥
प्रिय प्रिये वदस्वाशु सन्मुखीभूय मां प्रति ।
कोपस्य कारणं किं स्यादद्याकस्मात्प्रिये मयि ॥ ३३ ॥
वदत्येवं मृदूक्त्यापि सानुकूलेऽपि भर्तरि ।
मा मां स्पृश करेणेति सावदत्कोपशालिनी ॥ ३४ ॥
अलं त्वया प्रियेणापि मद्वचोऽकुर्वता शठ ।
अज्ञानाभिज्ञता प्रीतिं तल्लक्षणममानता ॥ ३५ ॥
उक्तं च—
"पानीयं च रसः शीतं परान्नं सादरं रसः ।
रसो गुणयुता भार्या प्रियस्पर्शान्तरी रसः" ॥ ३६ ॥
इत्याकर्ण्य स भार्योक्तमूचे वाच प्रियंवद[1] ।
वद प्रिये मया चाशु कर्तव्यं त्वन्मनीषितम् ॥ ३७ ॥
श्वासितानुनयेनेह साथ पापाशया शुभा ।
नंदन सभस नाम्ना चातुर्येण सुनिश्चयात् ॥ ३८ ॥

१ वो।

श्रुत्वेति कंपमानाऽसौ हास्तिकः पुनरब्रवीत् ।
यद् मुग्धे महादुष्टमेतत्कर्म त्वया कथम् ॥ ३९ ॥
किं भेयस्तद्भयेनापि दर्शयस्व प्रिये मम ।
नं हि कार्यमनुद्दिश्य मंदस्यापि प्रवर्तते ॥ ४० ॥
हास्तिकं सा (प्रिया) वादीद्युक्तिसद्गर्भया गिरा ।
हत त्वस्मिन्महाभेषा मा भीति मृणुव (?) यथा ॥ ४१ ॥
सत्यस्मिन् सुतः केचिद्ये यास्यंति ममोदरात् ।
ते सर्वेऽप्यस्य दासत्वं करिष्यंति न संशय ॥ ४२ ॥
अतोऽयं सर्वथा वध्यो नूनं भर्तर्विभेरि यत् ।
मारिते त्वत्र ते सर्वे स्वाधीनाः स्यु सुतादराः ॥ ४३ ॥
एवं तद्वचनैरीषत्समस्तसन्मानसोऽपि सः ।
किंचित्कारुणिकस्तत्र हास्तिक[2] पुनरब्रवीत् ॥ ४४ ॥
मुग्धे निरपराधं तं मारयामि सुतं कथम् ।
अपि चैकं सुतस्यास्य चोदारं विनयान्वितम् ॥ ४५ ॥
यदि वा मारिते तस्मिन् राज्ञो दंडभयो भवेत् ।
बांधवाश्चापि ते सर्वे कोपं दास्यंति सत्वरम् ॥ ४६ ॥
पुनर्दुर्लक्षिता सा च भर्तारं हास्तिकं प्रति ।
प्रपंचेन सर्वथा भर्तरन्यथा नापयी सुखम् ॥ ४७ ॥
अतः परं तु मद्गर्भे ये भविष्यंति सूनवः ।
तद्दत्ते ते करिष्यंति निर्विघ्नं सुखमापयाः ॥ ४८ ॥
अप्युपायं च ते वच्मि यथा तस्य वधं कुरु ।
नापि नृपतिभीतिः स्यान्नापि कुप्यति बांधवाः ॥ ४९ ॥

१ प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते इति सुभाषितं । २ मारकत्वं ।

यदासौ लांगलं मंदं मंदं वाहयति स्फुटम् ।
तदा स्वमप्यतः पश्चाद्वाहयातीव वेगतः ॥ ५० ॥

खरशृंगैर्बलीवर्दैः प्रातोदादसिताडितैः ।
मारयैनमनायासाद्यथापूर्वनिवेशितम् ॥ ५१ ॥

एवं कृते न भूपालो वद ज्ञास्यति ते क्वचित् ।
नापि बन्धुजना सर्वे युष्मद्दोषापवादा मनाक् ॥ ५२ ॥

भार्योक्तं प्रतिपाद्यासौ कामान्धो हालिकः कुधीः ।
तथास्त्विति बभाषे च तामाश्वास्य पृथग्जनः ॥ ५३ ॥

आलिंग्याभिमुखीभूय संतुष्टासौ स्वमानसे ।
कामकेलिं तया चक्रे प्रिया सुरतिपण्डिता ॥ ५४ ॥

अथ तत्सूनुना सर्वमाकर्णितं यथोदितम् ।
प्रच्छन्नोपसृतं वृत्तं समक्षमनुरक्तयोः ॥ ५५ ॥

प्रातरुत्थाय मार्गेण समागात् सवसः सुतः ।
हालिकस्तदनु भावो हन्तुकामः स्वनन्दनम् ॥ ५६ ॥

पृष्ठतोऽपि यावत्स जनकस्तत्र गच्छति ।
तावत्तत्पदनेनाशु तेभि संधारितं हलम् ॥ ५७ ॥

अथ गत्वा ददर्शासौ पामरस्तत्समं परम् ।
मूलान्मूलं हि कुर्वाणं खासिक्षेत्रं हलाग्रतः ॥ ५८ ॥

इत्याय हालिकोऽत्यादौ रे पुत्र महाशठ ।
भ्रात्या (?) कष्टकरं मूलमर्यच्छन्न करोषि किम् ॥ ५९ ॥

१ हलम् । २ नीचजनः ।

तथाथ पुत्र मां तात पीनत्वात्सस्यसम्पदम् ।
सोन्मूल्य रोपयिष्यामि नवोत्पातमसुखास्पदम् ॥ ६० ॥

समाकर्ण्य वचस्तस्य पित्राप्युक्तं स्वबुद्धितः ।
सिद्धं त्वमसि रे पुत्र नर्म्यं कांक्षसि रे जड ॥ ६१ ॥

छलान्वेषी स पुत्रोऽपि वचस्योपे समुद्यवाक् ।
तावेवं चेत्स्मरस्याशु रामौ यज्ञस्थितं त्वया ॥ ६२ ॥

इत्याह मां सुखस्थाने पुत्रं वांछसि मायिनम् ।
सुखार्थं कान्तया सार्द्धं तात बुद्धिस्तवाल्पकी ॥ ६३ ॥

पुत्रवाक्यात्स मूर्खोऽपि जातः मतिविशुद्धवां क्षणात् ।
दुराग्रही स्वयं बाले नैतु भक्त्या न मार्दवम् ॥ ६४ ॥

अथवच्चेऽप्येवं तद्वत्स्वामी जम्बूकुमारकः ।
स्वाधीनाः संपदस्त्यक्त्वा संक्लिष्टाः पुनरीहते ॥ ६५ ॥

एतत्सर्वं कथार्थं श्रुत्वा प्रोवाच धीधनः ।
निरीहोऽपि यथा वक्ति धर्मास्थान मृषोगिराद् ॥ ६६ ॥

प्रियाः कथानकं चैकं भवभ्रान्तिविघातकम् ।
सावधानतया श्राव्यं भवतीभिर्मयोदितम् ॥ ६७ ॥

विन्ध्याचले महाटव्यां यूथवर्ती मतंगज ।
वर्षापूरभरेणैव नर्मदां मधि सोऽप्यगात् ॥ ६८ ॥

तत्कलेवरं[1] कश्चिद्भक्षमाणोऽपि वायसः ।
मन्वगात्स करीकस्या लोलुपः पिशिताशितः ॥ ६९ ॥

१ तत्कलेवरोपरि स्थितः ।

मध्येमर्क यथाधावत्पतितोऽसौ महांबुधौ ।
काकस्त्वपिश्रितग्रासरससंलुब्धमानसः ॥ ७० ॥
भक्षितं वह्गुस्त्र्णं मत्स्याद्यैर्जलचारिभिः ।
काकेन गंतुमारब्धमुड्डीनेन महाम्बुधौ ॥ ७१ ॥
उड्डीयाड्डीय यावत्स व्योम्नि पश्यति दिङ्मुखम् ।
स्थानं ग्रामं तरुं वेलं विश्रामार्थं न किंचन ॥ ७२ ॥
कियत्कालं स संभ्रम्य पतितोऽथ महार्णवे ।
मांसैकलंपटमिस्तुच्छा वराका पचतां गत ॥ ७३ ॥
यथा तन्मांसलुब्धेन प्राप्ता चापदनीदृशी ।
तथाहं न भविष्यामि कांता कांचनपुत्रयाः ॥ ७४ ॥
भोक्तारं चाधुना भोगान् पुण्यरससम्पर्कसंभवान् ।
तत्याकान्मां निमज्जंतमुद्धरत्को भवांबुधौ ॥ ७५ ॥
इत्थं तेन प्रतिध्वस्तं तत्पद्मश्रीकथानकम् ।
कनकश्रीरथोवाच कथां कौतूहलावहाम् ॥ ७६ ॥
कैलासे पर्वते रम्ये कपिश्चैकोऽभवत्किल ।
दैवयोगाद्यथा पेथुः शैलशृंगमधिष्ठितः ॥ ७७ ॥
पतित्वाथ ततो वेगात्संक्षर्णरितविग्रह ।
अकामनिर्जरां कुर्वन् मृत्वा जातः खगाधिपः ॥ ७८ ॥
एकदा स मुनिं मत्वा पप्रच्छ स भवांतरम् ।
मुनिस्तूचे यथाहृत्तं सावधिज्ञानचक्षुषा ॥ ७९ ॥
पुरा जन्मनि निर्येश त्वमासीत्कपिसत्तम ।
कैलासात्त्व पतित्वाशु मृत्वा जातो खगः शुभात् ॥ ८० ॥

भुक्त्वेविमचनं रम्यं पावनं मुनिनोदितम् ।
निश्चिकाय स्वगेनाशु स्थापितं हृदि दुर्धिया ॥ ८१ ॥
यत स्थानात्कपिर्मृत्वा जातो विद्याधरो नरः ।
नूनं ततः स्वगो मृत्वा यथोऽहं भविता क्षणात् ॥ ८२ ॥
अतएव मयावश्यं कर्तव्यं मरणं वरम् ।
तत कैलासकूटाग्रात् पतित्वाय तथाविधम् ॥ ८३ ॥
विमृश्य चैकदास्थादीत्सगो निजमियां प्रति ।
यथा मनीषितं स्वस्य प्राणघातस्य सूचकम् ॥ ८४ ॥
प्रिये सर्वं हि प्राप्यं स्वगमोक्षात्रिकं फलम् ।
कथकं कैलासकूटाग्रात्पातेनाशु विभ्रमया ॥ ८५ ॥
भर्तुर्वचः समाकर्ण्य विलक्षणापातिदुःखिता ।
भार्या विद्याधरस्योच्चैर्विहस्य क्षीणमानसा ॥ ८६ ॥
कांत कांत महामाझ वृथा मरणमिच्छसि ।
विद्याधरोऽसि नाथ त्वं दुष्कर्म किमतः परम् ॥ ८७ ॥
उल्लंघ्याय प्रियावाक्यं कैलासशृंगात्पपात सः ।
मृत्वा दुर्ध्यानयोगेन यातो रक्ताननः कपिः ॥ ८८ ॥
ससम्पो यथा स्वगो मूर्खो भुक्त्वा स्वाधीनसंपदः ।
मृत्वाप्यापन्मयी जातस्तथास्यात्कीयनायकः ॥ ८९ ॥
मातादयापि महारम्यास्त्यक्त्वा सर्वा हि सम्पदः ।
भाविन्यस्ताः समीहेत प्राप्येत तपसा न वा ॥ ९० ॥
जम्बूस्वामी तदाकर्ण्य सर्वं कनकश्रियोदितम् ।
भावाचीधरं व्याजादेक किंचित्कथांतरम् ॥ ९१ ॥

विंध्याद्रौ बलवान्कश्चिदासीत्कामातुरः कपिः ।
असहिष्णुः कपीन् सर्वान् हन्यमानो वनेचरान् ॥ ९२ ॥
यावं जातं स्वभार्यायाः स्वपुत्रमपि हन्यते ।
एकाकी सुरसक्रीडां कर्तुं ( कामो ? ) वनांतके ॥ ९३ ॥
अथैकदा तत्सुतोऽपि जातो न ज्ञायते तदा ।
वैभारभूद्विगाद्गोप्यः स्थितो भूतसा ॥ ९४ ॥
ततः क्रमेण जातोऽसौ युवा स्मरातुरः कपिः ।
(स) भार्या मन्यमानश्च मातरं रंतुमुद्यमी ॥ ९५ ॥
— न केनापि तत्पित्रा वानरेण सम(मीसि)क्षतः ।
समुद्भूतरुषा तेन हंतुं नीतो बलादिह ॥ ९६ ॥
— स्कारस्कास्यश्च विभीषणः ।
सोऽपि दंतैर्नखाग्रैश्च जातकोपोऽदशत्कपिम् ॥ ९७ ॥
तदा तौ मिथ   द्धौ युद्धमुल्बणम् ।
नखदंताभिघातैस्तैर्मर्मरौ जनकात्मजौ ॥ ९८ ॥
मध्ये वृद्धकपिर्वेगादपक्षा — — हाम् ।
रुष्टः कोपपरः पृष्ठी निर्भीकस्तरुण कपिः ॥ ९९ ॥
तावधावद्विनस्ति स्म वानरं वृद्धमेव तम् ।
—विमयीभूत्वा व्याकुलः स्वगृहं प्रति ॥ १०० ॥
अथ पिपासया तूर्णं तृषार्तशुष्कताल्लकः ।
संप्रविष्टो जले मीपयोये सर्पकिले ॥ १०१ ॥
पीत्वाथ कल्लषं तोयं ततो निःसर्तुमक्षम ।
आतुरा विषपार्येषु मृतस्तत्र कुधीर्यथा ॥ १०२ ॥

तथा नाहं भवाम्यत्र संसारे प्रियवादिनि ।
निर्ममं विषयपूर्वैः कः को मां हि समुद्धरेत् ॥ १०३ ॥
इत्युत्तरश्रवणादेव कनकश्रीरभीरभूत् ।
विनयश्रीस्तृतीयोऽथ सा कथाकोपकौतुका ॥ १०४ ॥
एकः कश्चिद्दरिद्रो हि सत्तनामास्ति कुत्रचित् ।
मध्येवनं स प्रत्यूषे याति काष्ठादिहेतवे ॥ १०५ ॥
ततश्चेन्धनमानीय विक्रीयाथ यथार्थतः ।
कष्टेन वर्तनं तस्य भवेत्तावत्तराद्यथात् ॥ १०६ ॥
एकदा बहुमूल्यस्याक्षम्यं किंचित्ततोऽधिकम् ।
भाजनाद्यधिष्ठं स्यादेकं रत्नकमागतम् ॥ १०७ ॥
ततो विमृश्य दीनोऽसौ भार्यया समकं तदा ।
आपद्गताविहेतीस्वद्भूमौ निक्षिप्तवानिह ॥ १०८ ॥
अथ कश्चित्तवासी च साध्वसात्तत्र कानने ।
रत्नभांडं सुनिक्षिप्य गतस्तीर्थादिकेषु सः ॥ १०९ ॥
काननं भ्रमता तेन दृष्टं तद्दैवयोगतः ।
निक्षिप्तं च ततोऽन्यत्र क्षोमायात्र विमृश्यता ॥ ११० ॥
अस्याहं रत्नमेकैकं ग्रहीष्यामि यथावत ।
इत्यानंदमनाश्चासौ वैभापूर्णे स्वसद्मनि ॥ १११ ॥
गत्वा गेहे दरिद्रोऽसौ भार्यां प्रति निवेदयत् ।
रत्नभांडं मया प्राप्तं प्रिये पुण्योदयादिह ॥ ११२ ॥
स्थापितं तच्च कांतारे मया चाद्य प्रयत्नतः ।
सत्यं जानीहि हे कांते नान्यथा वच्मि कर्हिचित् ॥ ११३ ॥

श्रुत्वाश्चर्यवती भार्या जाता रोमांचिता तदा ।
भद्रं तवास्तु हे कांत चिरंजीवी त्वकं मम ॥ ११४ ॥
अथ मयोदितं मन्त्रमवश्यं क्रियतां त्वया ।
संचितो रूपकः पूर्वं योऽसौ संगृह्य लसताम् ॥ ११५ ॥
सोऽपि तत्रैव संस्थाप्यो रत्नभांडे सुकौशलात् ।
त्वमहं च तथापूर्वं कुर्याव कर्म सांप्रतम् ॥ ११६ ॥
भार्यापितं दरिद्रेण मोहाद्भार्योदितं वचः ।
वरं वरं त्वयोक्तं यत्कांते वैदग्ध्यशालिनि ॥ ११७ ॥
ततस्तौ दंपती स्यातां कार्यगुप्तरसमौ ।
पद्नाच्छिरसा नीत्वा विक्रीय च कुक्षिंभरौ ॥ ११८ ॥
एवं व्यतीयमानेऽत्र काले कियति चानयोः ।
दैवाद्रत्नपतिः सोऽप्यमागतस्तत्र कानने ॥ ११९ ॥
यथास्थाने निरीक्ष्याशु न लब्धं रत्नभांडकम् ।
ततश्चायमभवान् जातो यत्र तत्र निरीक्षणे ॥ १२० ॥
चिराल्लब्धं धनेशेन रत्नभांडं स्वपुण्यतः ।
नीत्वोत्साय गतः सोऽयं सानंदास्यास्यं भवि ॥ १२१ ॥
अहो पुण्यवशाल्लक्ष्मीर्यत्रयत्रापि समायतः ।
विनष्टाप्यन्यथानेन कथं लब्धा सुखादिह ॥ १२२ ॥
एकदोद्घाट्य कुंभं स रिक्तं यावत्स पश्यति ।
हत्वा हत्वा शिरः स्वीयं रोदिति स्म शठोऽधमः ॥ १२३ ॥
रत्नभांडेन तेनाहं मम पूर्वोऽपि रूपकः ।
संचितोऽपि विनष्टोऽमुकेन सार्द्धं स्वदुष्कृतात् ॥ १२४ ॥

हा वंचितोऽस्म्यहं नून दुर्दैवेन विपाकिना ।
यतो लब्ध्वमपि स्याम दानायाय न शक्नुय ॥ १२५ ॥
स्वपर्शां शृणवे नैव मत्स्मीं भासामर्पाइ यः ।
पश्चात्तापपरो मूर्ख संसयतस भविष्यति ॥ १२६ ॥
जम्बूस्वामी निशम्यैतद्विनयश्रीकथानकम् ।
प्रोचे कथांतरं व्याजाद्वाक्यं मत्युत्तरप्रदम् ॥ १२७ ॥
आसीद्भूमिमन्दर' कश्चिन्नजुल्कपदत्त इतीरितः ।
वाणिज्याय जगामाशु कांतारं वर्त्म दुर्गमम् ॥ १२८ ॥
दुर्दैवात्तत्र सम्प्राप्तो गजो दुर्मदभीषण ।
धावं तं वणिजं कापालकांत इव निर्दयः ॥ १२९ ॥
तद्भीतो वणिजां नाथः पलायपरस्ततः ।
वट्यारोहमाकांक्ष्य स्थित कूपांतरालतः ॥ १३० ॥
तत्र मारोहमूलं वल्कुर्वात मूषकद्वयम् ।
सितासितं च वर्णेन तद्दर्शं वणिग्वरः ॥ १३१ ॥
चिंतितं तेन चित्ते स्व किं कर्तव्यं मयाधुना ।
कूपगर्ते पतिष्ये चेच्छिन्ने शतलंडवा ॥ १३२ ॥
चिंतयमिति यावत्स स्थिता धीरतया वणिक् ।
तावत्कूपस्य भूभागेऽजगर हष्टवानहो ॥ १३३ ॥
कंपमानाऽस्य तद्भीतरतर तत्र कूपके ।
पार्श्वेवाल्मीकरंध्राच्च निर्गता भीषणाहयः ॥ १३४ ॥
यावत्सं वणिजो दुःखं तावत्तापत सकले ।
चिंताव्याकुलचित्तस्य कः समा वत्सुर्मता ॥ १३५ ॥

नागोऽप्य रोषधावत्य यदभूत्तत्समुद्यमी ।
आत्मस्कंधप्रवेशेनेह ध्वनति स्म महाद्रुमम् ॥ १३६ ॥
स्थितस्तत्र वटाभासे च्युता माक्षिकसद्मनः ।
एकस्तस्योन्मुखस्यास्ये मधुबिंदुरपीपतत् ॥ १३७ ॥
स तेन निर्वृतिं लेभे यथा स्वर्गं मनीषितम् ।
उत्तमं स्थानमेवैतन्मया मार्तं यदमिति ॥ १३८ ॥
अत्रांतरे खग कश्चित्संचरन्व्योमवर्त्मनि ।
दृष्ट्वा दुःस्थं तमुत्तीर्य विमानादित्यवीवदत् ॥ १३९ ॥
रे रे मूढ खगेशोऽहं त्वामुद्धर्तुमनं स्वर ।
मामकं भुजमालम्ब्य निःसरस्वाशु सत्वरात् ॥ १४० ॥
श्रुत्वावादीत्स मूढात्मा मधुसास्वादलोलुप ।
प्रतीक्षस्व खगेश त्वं मन्मुखे संपतन्मधु ॥ १४१ ॥
तावत्सुखेन तिष्ठामि जीव्ये चाहं यथास्थित ।
मधुबिंदुरसाभावात्ततो निःसरणेन किम् ॥ १४२ ॥
भूयमपि कृपाक्रांत खगो भूयोऽवदत्सुधी ।
रे रे मूढानभिज्ञोऽसि मर्तुमिच्छसि किं हठात् ॥ १४३ ॥
नेक्षसे मरणं पार्श्वे स्थितं ते दुर्निमित्ततः ।
बिंदुमात्रस्य लोभेन मा याहि यममंदिरम् ॥ १४४ ॥
आलकोलाहलेनालं यदि जीवितुमिच्छसि ।
आलंबयस्व मे बाहुं विलंबाऽनुचितस्तव ॥ १४५ ॥
इत्यादिविविधैर्वाक्यैर्बोधितोऽपि खगेशिना ।
नागमन्मार्दवं मूर्खो रसनेन्द्रियवञ्चित ॥ १४६ ॥

आकर्ण्येदं वचस्तस्य मर्तुकामस्य दुर्दशः ।
विद्याधरो जगामाशु सत्वरं स्वास्पदं प्रति ॥ १४७ ॥
अथ प्राप्तः स पंचत्वं सरथाश्वपतीरितः ।
श्वपाकुलीभूय भ्राम्यति हाहाकारं रवमिति ॥ १४८ ॥
कूपश्रीपतद्देवासौ सम्पदत्ता वणिक्सुतः ।
गुल्मसूपकसंछिन्नभयारोपसमन्वित ॥ १४९ ॥
कूपांत मपतमाशु मसिताऽजगरेण सः ।
कालरूपेण तेनाशु सम्पदत्तो वणिग्यथा ॥ १५० ॥
तथाहं न विश्वासाम्मि सुखलेशस्य हेतवे ।
कालवस्त्र महाभीमे विद्याभ्यासरतो भवन् ॥ १५१ ॥
निभृता स्वामिवाक्यास्ता विनयश्रीः सुधीरपि ।
अथोवाच कथां तुर्यां रूपश्री रूपशालिनी ॥ १५२ ॥
अथैकत्र समायात प्रावृट्कालो मनोहरः ।
नवांभोदैर्महीमार्गं दुर्गमकारणं जगात् ॥ १५३ ॥
रन्ध्रच्छिद्राणि सर्वाणि वारिपूरैर्महीतले ।
विपु ज्ञा(?)न्धारसंभवसर्पापिजनकर्दकाः ॥ १५४ ॥
गमनागमनाभ्यां च कर्दमीभूतभूतलः ।
महादुर्दिनतमस्तोमतिराहितदिवाकरः ॥ १५५ ॥
अथ चैवविधे काले वर्तमाने महीतले ।
कुंभकारः क्षुधाक्रांता निगता मृत्कर्ये बिलात् ॥ १५६ ॥
तेन पर्यन्तगा दृष्टौ तदमूलीअतिनीपणः ।
संमनाभाऽविपीमरसथमभिज्ञासयम कपः ॥ १५७ ॥

१ मरद्यः इत्यमरः स्यात् इत्यमरः ।

कृष्णसर्पं समालोक्य कृषकस्य पुरःस्थितम् ।
तथास्थे कृकलासोऽथ भीतकम्पितगात्रो भयात् ॥ १५८ ॥
भीषिष्येऽहं कथं देव केनोपायेन सांप्रतम् ।
चिंतयन्निति सद्गात्रिविशेश नकुलालय ॥ १५९ ॥
नागोऽपि तमनुप्राप्य छिद्रे छिद्रशतान्विते ।
क्षुधार्तनामरो कास्या प्राणिनां प्राणिसंकटे ॥ १६० ॥
तथाप्यग्रे स्थित मुक्त्वा कृकलास सरीसृपः ।
गच्छति स्म ततोऽप्यग्रे तत्कुटुम्बाभिलाषया ॥ १६१ ॥
विशंस्तत्र बिले दृष्ट्वा नकुलैः स विलेशय ।
भक्षितस्तैः क्षुधाक्रांतैः समेत्य पशुभिर्यथा ॥ १६२ ॥
तथाय मामकः स्वामी विवेकरहितो जडः ।
भस्यप्रास त्यजंल्लक्ष्मीं यथप्राप्यो भविष्यति ॥ १६३ ॥
श्रुत्वा जम्बूकुमारोऽसौ वाक्य रूपश्रियोदितम् ।
ऊचे तत्प्रतिबोधाय रम्यं किंचित्कथांतरम् ॥ १६४ ॥
आसीत्स जम्बुको कश्चित्त्र विन्ध्याचलतले ।
एकदा तु बिभार्येर्या जगाम नगरांतरम् ॥ १६५ ॥
तत्र जरद्रव वैकं मृत दृष्ट्वा स हर्षित ।
अद्य संपत्स्यते नून यथास्य मे मनोरथः ॥ १६६ ॥
चिंतयित्वा प्रविष्टः स तत्कलीवरेऽपमर ।
भक्षयन्निषितं तस्य नाशासीद्रमनीं गताम् ॥ १६७ ॥

१ बुभुक्षितः किं न करोति पापं । इति हितोपदेशे । २ सर्पः । ३ रात्रौ ।
४ स्वदयनं ।

प्रातःकालेऽथ संप्राप्ते दृष्टः पौरजनैरिह ।
वदस्थिपंजराशिर्यक् निःसर्तुमपि न क्षमः ॥ १६८ ॥
चिंताव्याकुलितः सोऽयं चिंतति स्म निजे हृदि ।
अद्य मे मरणं नूनं संप्राप्तं दैवयागत ॥ १६९ ॥
अथ पौरजनः कश्चित्तस्य कर्णद्वयं यथा ।
पुच्छकं च छिनत्ति स्म सिद्धौषधिधिया कुधीः ॥ १७० ॥
चिंतितं जम्बुकेनेह जीविष्ये चेदहं मनाक् ।
ईदृशोऽपि कथमिहं न नष्टं न किमप्यहो ॥ १७१ ॥
अथ कश्चिद्द्विजस्तस्य रदानुत्पाट्य चाश्मना ।
नीत्वागमद्गृहे स्वस्य वशीकरणहेतवे[1] ॥ १७२ ॥
अचिंतयत्तदा सोऽपि दैवात्क्षीप्ये कथंचन ।
दृष्टोऽपि मदापेऽद्य नूनं यामि वनांतरम् ॥ १७३ ॥
चिंतयन्निति तथाशु श्वानाद्यैर्मारितः क्षणात् ।
भक्षितश्च शृगालोऽसौ रसनावशमी यथा ॥ १७४ ॥
तथाहं न भविष्यामि विषयाशा न सुस्थधीः ।
प्रिये जानीहि रे मात्रा हस्तिनाशुत्पथे पतेत् ॥ १७५ ॥
मामधुर्कं हृषीकार्थैरामेत्यां कः समुद्धरेत ।
न परीक्षाक्षमं चैतद्वचोऽपि तव सम्मतम् ॥ १७६ ॥
इत्थं नानाविधाकाराद्यैः संलापैस्तया चालितम् ।
न चचाल मनस्तस्य मनागपि महात्मनः ॥ १७७ ॥
अथोत्तरं सुरासक्तो नाम्ना विद्युच्चरो नरः ।
निशि कामस्तागराभिर्गतघोरकर्मणि ॥ १७८ ॥

---

1 उत्पाद्य ।

सौधं सौधं भ्रमन्नेव चिंतयंस्तस्करेक्षणात् ।
सोऽर्हद्दासगृहे दैवात्प्रविष्टो दुष्टधीः खलु ॥ १७९ ॥
रम्यागारं कुमारस्य प्राप्तवानिति व्यचिंतयत् ।
आदौ रत्नानि गृह्णामि किं वा पश्यामि कौतुकम् ॥ १८० ॥
वधूवरद्वयोरेव मिथःसंजल्पकौतुकम् ।
शृणोम्येकाग्रतो नूनं ततो मुष्णामि सद्धनम् ॥ १८१ ॥
इति निश्चित्य चित्ते स्वे शुश्रूषुः स्याद्द्वयोरपि ।
वार्तां विद्युच्चरो नाम्ना दस्युकर्मरतोऽपि यः ॥ १८२ ॥
श्रुत्वा द्वयोर्यथा वृत्तं वृत्तांतं वरकन्ययोः ।
परमाश्चर्यपन्नो जातः सोऽपि विद्युच्चरस्तदा ॥ १८३ ॥
अहो धैर्यमहो धैर्यं वर्णितुं केन शक्यते ।
यद्युवोऽपि मनाग्धैर्यं नापि भिन्नं वधूमनैः ॥ १८४ ॥
अत्रांतरे कुमारस्य माता सा दुःखपूरिता ।
गमागमौ करोति स्म व्याकुला तत्र वर्त्मनि ॥ १८५ ॥
पश्यति स्म महामोहाद्गृहद्वारं मुहुर्मुहुः ।
किं जातमद्य किं भावि वर्तमानमथात्र किम् ॥ १८६ ॥
कामिनीकंठपाशे किमपतत्किमुताऽथवा ।
इति संशयदोलायामारूढा दुःखिता सती ॥ १८७ ॥
कुड्यपार्श्वेऽत्र संलीनं तस्करं संददर्श सा ।
अवादीद्भीतभीता च कः कोऽस्त्यत्र महानिशि ॥ १८८ ॥
ततो विद्युच्चरोऽवादीन्मातर्मा गच्छ साध्वसम् ।
अहं विद्युच्चरो नाम्ना चौरोऽस्मीह धरातले ॥ १८९ ॥

चौर्यकर्म करोम्यत्र नित्यं स्वनगर वसन् ।
अतःपूर्वं हृतं मातर्बहुशोऽपि महाधनम् ॥ १९० ॥
मुषितं स्वद्गृहादेव स्वर्णरत्नादिकं मया ।
किमत्र बहुनोक्तेन यावदद्य विधीयते ॥ १९१ ॥
अथोवाच कुमारस्य माता विद्युच्चरं प्रति ।
वत्स यद्रोचते तुभ्यं तद्गृहाण ममालयात् ॥ १९२ ॥
ततो विद्युच्चरेणोक्तं वाक्यं जिनमतीं प्रति ।
मातर्मन्यस्व मे चिन्ता न स्याद्य धनार्जने ॥ १९३ ॥
किंतु कौतूहलं चैतन्मया दृष्टमपूर्वजम् ।
यद्युषो न गता निद्रा कन्यासैर्वरयापिताम् ॥ १९४ ॥
कारणं हि किमत्राहो मातरप्रातिती वद ।
अतस्त्वं मे स्वसा धर्मादहं भ्राता यथा तव ॥ १९५ ॥
श्रुत्वा जिनमती प्रोच धैर्यमालम्ब्य तं प्रति ।
भ्रातरेकोऽस्ति पुत्रो मे सुधीः कुलदीपकः ॥ १९६ ॥
मोहादुद्वाहितोऽप्यत्र तपो वाञ्छेद्विरक्तधीः ।
आसूर्योदयमस्यास्ति नियमस्तपसे ध्रुवम् ॥ १९७ ॥
प्रातर्मुनिरसौ दीक्षां ग्रहीष्यति न संशयः ।
तद्वियोगकुठारेण मे मनः खण्डखण्डताम् ।
नीयतेऽतोऽधुना भ्रातर्जागर्तास्मि चलचेतसा ॥ १९८ ॥
द्रष्टुं पुत्रोत्सवं दैवाद्वधूभिः सह संगमम् ।
मुहुर्मुहुर्दुर्लभतरं व्याकुलार्ता विलोकये ॥ १९९ ॥
श्रुत्वा जिनमतीवाक्यं जातः कारुणिको महान् ।
ऊचे मातर्मया ज्ञातं सर्वमेतत्कथानकम् ॥ २०० ॥

मा बिभीस्त्वं सुसाध्येऽस्मिन् कार्ये कार्यविदा मया ।
यथाकार्यविधित्सार्थे मधु मां हि प्रवेशय ॥ २०१ ॥
मोहनं स्तंभनं मंत्रं तंत्रं चापि वशीकरम् ।
यथावदुर्घटं किंचित्तत्सर्वं हेलया क्रिये ॥ २०२ ॥
अद्य चेद्भूपवनसरोजालीमधुव्रतम् ।
त्वत्सुतं न करोम्यत्र तदेयं मे गतिर्ध्रुवम् ॥ २०३ ॥
एवं कृतमतिस्तोऽसौ यावदास्ते पतिः स्वयम् ।
गत्वा जिनमती तत्र तद्द्वारे सनके स्थिता ॥ २०४ ॥
अङ्गुल्यग्रैः कपाटस्य युगलं तर्जयत्यपि ।
नोवाच व्रीडया किंचिच्चातुर्यैकनिधिस्तदा ॥ २०५ ॥
अररद्वंद्वमुद्घाट्य नीतांतः सूनुना तदा ।
आशीर्वादनपरा जाता ससभा मधुरा सती ॥ २०६ ॥
अथ जम्बूकुमारेण विज्ञप्ता जिनपादयो ।
त्वरितं वद भो भ्रातः किमत्रागमकारणम् ॥ २०७ ॥
ऊचे जिनमती पुत्र त्वयि गर्भस्थितेऽगमत् ।
अनुजोऽस्य मामको भ्रातर्वाणिज्यार्थं विदेशके ॥ २०८ ॥
इदानीं स समाकर्ण्य पुत्रोद्वाहमहोत्सवम् ।
दूरादप्यागतो द्रष्टुं युष्मत्संदर्शनोत्सुकः[1] ॥ २०९ ॥
श्रुत्वा जिनमतीवाक्यमूचे जम्बूकुमारकः ।
आनयस्वाशु भो मातरागतं मम मातुलम् ॥ २१० ॥
पुत्रस्याज्ञां समादाय माता नीतः समभ्यगात् ।
दस्युर्विद्युच्चरो नाम्ना तत्समीपं समागतः ॥ २११ ॥

१ कम्पम् ।

मामामातुसमालोक्य जम्बूस्वामी स्वगौरवात् ।
आलिलिंग महास्नेहात्तल्पेकादुत्थितो त्वरा ॥ २१२ ॥
पृच्छति स्माय सं स्वामी मार्गोद्भिकुशलं वरम् ।
एतावत्सु दिनेपूच्चैः क स्थितं मातुल त्वया ॥ २१३ ॥
श्रुत्वा विद्युच्चरोऽप्यादीद्भागिनेयप्रिया तदा ।
वाणिज्यस्य कृते सौम्य शृणु यत्र मया स्थितम् ॥ २१४ ॥
दक्षिणस्यां दिशि प्राप्य समुद्रं मलयाचलम् ।
पटीरविद्रुमाकीर्णमत्रोत्तुंगमनोहरम् ॥ २१५ ॥
अगम्यं हि सिंहलद्वीपं केरलं देशमुत्तमम् ।
द्रविडं चैत्यसद्धारामं जैनलोकपरिवृतम् ॥ २१६ ॥
चोलं कर्णाटसंज्ञं च कांबोजं कौतुकावहम् ।
कांचीपुरं सुकांत्या वै कांचनाभं मनोहरम् ॥ २१७ ॥
कौंतलं च समासाद्य सद्धे पवनमुत्तमम् ।
महाराष्ट्रं च वैदर्भदेशं नानाजनाश्रितम् ॥ २१८ ॥
विचित्रं नर्मदातीरं प्रवत्र विंध्यपर्वतम् ।
विंध्याटवीं समुल्लंघ्य तत्रस्थसिंहव्याघ्रम् ॥ २१९ ॥
आहीरदेशं पेचर्लं मृगुकच्छतटं महत् ।
यत्र श्रीपालमूपालो यवनकोऽपि जिनः श्रुतः ॥ २२० ॥
कोङ्कणं नमरं चाथ किष्किन्धनगरं स्फुटम् ।
इत्यादिकौतुकान्येपि दृश्य वै कृतमानहम् ॥ २२१ ॥
पश्चिमायां च सौराष्ट्रदेशं संख्यमानहम् ।
अनिशं तीर्थकर्तुर्यो पंचकल्याणपावनम् ॥ २२२ ॥
यत्रोर्जयादिशृंगेषु नेमिनाथो जिनेश्वरः ।
त्यक्त्वा राजीमतीं भार्यां कृतवांश्च तपश्चिरम् ॥ २२३ ॥

संपद संति सर्वाश्च तत्र को वर्णयेत्कविः ।
यतो मुक्तिमगात्रेमिः यदुवंशविभूषणः ॥ २२४ ॥
मित्रमाळ विशालं च गच्छाऽऽर्द सर्बुदाचलम् ।
लाटदेशं महारम्यं सर्वसंपत्समन्वितम् ॥ २२५ ॥
चित्रकूटं गिर सौम्यं देशं माळवसंज्ञकम् ।
पारियात्रमथास्याथ देशं जैनालयाङ्कितम् ॥ २२६ ॥
उत्तरस्यामथो दृष्टा मया शाकंभरी पुरी ।
जैनचैत्यालयाकीर्णा मुनिवृन्दैः समाश्रिता ॥ २२७ ॥
काश्मीरं करहाट च सिंधुदेशसमस्तकम् ।
दृष्टवानेकशा चाह किं दूर व्यवसायिनाम् ॥ २२८ ॥
ततः पूर्वदिशाभागे कम्बोज गौडदेशकम् ।
अंगं वगं कलिंगं च जालन्धरमनुक्रमात् ॥ २२९ ॥
वाणारसीं कामरूप दृष्टवानहमादरात् ।
यद्यद्दृष्टं मया पूर्वं तत्सर्वं कथ्यते कियत् ॥ २३० ॥
इति विविधकथौघं सद्विवेकी स शृण्वन्
परपरिचयभीत कामिनीमध्यसस्थ ।
तदनुविरतचित्तो चौरवाक्यं च किंचित्
जयति जगति पूज्यः स्वामिजम्बूकुमार ॥ २३१ ॥

इति श्रीजम्बूस्वामिचरित्रे भगवत्श्रीपश्चिमतीर्थकरोपदेशानुसरित
स्याद्वादानवद्यगद्यपद्यविद्याविशारदपण्डितराजमल्लविरचिते
साधुपासाख्यसाधुटोडरसमभ्यर्थिते मार्गाचतुष्ककथा-
विधुच्चरागमनवर्णनो नाम दशमं पर्व ॥ ८ ॥

# अथ एकादश पर्व ।

धर्मवृद्धिमसाधाद्यै सर्वेऽप्यीष्टा भवतु वः ।
साधुपासांगजस्यार्धो वव श्रीसाधुर्धीश्वर ॥ १ ॥ इत्याशीर्वादः ।

मल्लि मोहमहामल्लप्रविमल्लमहं स्तुवे ।
मुनिसुव्रतमाम्नातसुव्रतापवर्गसौरविकम् ॥ १ ॥
अथ विद्युच्चरोऽप्यानीन्मयां मातुलसैतकः ।
मार्दवोद्वाधमिच्छुस्तं जम्बूस्वामिनमंजसा ॥ २ ॥
अहो जम्बूकुमार त्वं महाभागो महोदयः ।
कामदेवसमो दीप्त्या मीर्याइग्निसमो वशी ॥ ३ ॥
हिमरश्मिसमः सौम्यो यमुसाम महीतले ।
मेरुवद्धीरधीरस्त्वं गंभीरश्च समुद्रवत् ॥ ४ ॥
भानुमानिव तेजस्वी कंजवत्कामकाद्यमः ।
शरणागत महाराम रक्षण भ्रमपंजरः ॥ ५ ॥
दुर्लभं भोगसामग्रीं जानीहि त्वं भरावले ।
सा सर्वापि त्वया प्राप्ता पूर्वोपार्जितपुण्यतः ॥ ६ ॥
दुर्लभं चैकतमेकं वस्तुजातं समागतः ।
भोक्तुं शक्तिर्न केषांचिदपवासत्यपि भोजने ॥ ७ ॥
परेषां भोजनं नास्ति भोक्तुं शक्तिस्तु वर्तते ।
द्वय प्राप्य न भुंजीत यः स दैवेन वंचितः ॥ ८ ॥

यथा या संति कामिन्यः कामोत्साहो न विद्यते।
अथ कामोद्यमस्तस्य कामिन्यो न कदाचन ॥ ९ ॥
यथा वा दानशक्तिर्येषेरे द्रव्यं न वर्तते।
अथ येद्(स्त्व)गृहे द्रव्यं दानशक्तिर्न जायते ॥ १० ॥
दैवाद्यदुभयं प्राप्य यो न भुंक्ते स मूढधीः।
मक्षमुगभक्षुन्नुरेति संध्याभ्रतं जडः ॥ ११ ॥
तस्य हेतोस्तपःक्लेशं चिकीर्षसि विचक्षण।
सांगं निर्विघ्नं पूर्णं वस्तुसं स्वत्पुरःस्थितम् ॥ १२ ॥
तत्यक्त्वा तपसा मून ततः साधिकमीहसे।
इत्याकूतं ते भाति न परीक्षाक्षमं क्वचित् ॥ १३ ॥
एकं कथानकं रम्यं वच्मि दृष्टांतहेतवे।
भागिनेय महाभाग सावधानतया शृणु ॥ १४ ॥
तद्यथा करभः कश्चिदासीत्सौहस्त्यर्मथरम्।
यथेच्छं कानने रम्ये भ्रमति स्म द्रुमान् बहून् ॥ १५ ॥
एकदा भ्रमता तेन वृक्षः कूपतटे स्थितः।
आस्वादितो यथास्वादु ग्रीवया संभ्रमात्मया ॥ १६ ॥
पत्रकानि सकृत्स्येव छित्वा करभेण च।
स्वादितं मक्षिकाजालान्मधुबिंदुं तथैककम् ॥ १७ ॥
चिंतयामास चित्ते स रसास्वादवशीकृतः।
वृक्षस्यास्योर्ध्वशाखायां साधिकं तद्भविष्यति ॥ १८ ॥
निश्चित्येति महालोभादूर्ध्वशाखां प्रचक्रमे।
गंतुं पुनः पुनश्चोर्ध्वशाखां प्रति तृषातुरः ॥ १९ ॥

किं बहु मत्सरंस्तत्र मृतः कूपे पतन्नसौ ।
मर्मरांगो महालोभाद्बभूव करभो यथा ॥ २० ॥
तथा त्वं मामिमामार्य त्यक्त्वा प्राप्तां हि संपदम् ।
चिकीर्षसि तपश्चोग्रमज्ञानेन विमोहितः ॥ २१ ॥
जम्बूस्वामी ततो वाचमूचे विदुरवरं प्रति ।
अमीषरमदं किंचिच्छृणु वाम कथांतरं ॥ २२ ॥
एको वणिक्सुतः कश्चित्सद्व्यकार्यरतोऽभवत् ।
एकदा व्यवसायार्थं गतो देशांतरं स्वतः ॥ २३ ॥
मार्गे पिपासितः सोऽयमभूत्काननसंकटे ।
स्वापदा जलमप्राप्य पश्चात्तापेन पीडितः ॥ २४ ॥
निश्छ्लोऽहं यथा गेहादरण्ये पतिताऽधुना ।
न मामीति मतं चैन्म मरणं स्याद्विनिश्चयात् ॥ २५ ॥
चिंतयन्निति यावत्स आस्ते वणिग्वनांतरे ।
क्षुधितस्तावदभ्यस्तैश्चौर्यकर्मपरायणैः ॥ २६ ॥
ततः शोकपिपासाभ्यां पीडितोऽसौ वणिग्वरः ।
गंतुं नालं पदं चैकं सुष्वाप तरोरधः ॥ २७ ॥
तत्र सुप्तः स अद्राक्षीत्स्वप्नमेकं वनांतरे ।
पयः पीत्वा करोति स्म निद्रया शयनं तथा ॥ २८ ॥
अथ जाग्रदवस्थः स चिंतयामास चेतसि ।
क्व सरः क्व जलं तत्र यन्मया पीतमंभसा ॥ २९ ॥
तद्वत्स्वप्ननिभां विद्धि मातुल त्वं च संपदम् ।
महतां हि कथं लोभो भवेदत्र कदाचन ॥ ३० ॥

इति श्रुत्वा कुमारस्य वार्तां विद्युच्चरस्तदा ।
जातो निरुत्तरस्तूर्णं मिथ्यैकांतादिवादिवत् ॥ ३१ ॥
अथ विद्युच्चरो वस्तुर्मायया मातुलश्च यः ।
निरस्तोऽपि कथां कांचिदपरामब्रवीत्पुनः ॥ ३२ ॥
एकः कश्चिद्वणिग्वृद्धो गृहमेधी मियारतः ।
तस्य प्रिया प्रचंडास्य (स्ति) युवती नवयौवना ॥ ३३ ॥
सैकदादाय स्वर्णादि गृहेरादपि निर्गता ।
विषयद्रव्यसुखं भोक्तुं स्वेच्छया कामरूपवत् ॥ ३४ ॥
गच्छंती सापि धूर्तेन केनचिद्वसिता क्षणात् ।
रंजिता मायिना तेन चाटुवाक्यकृता जवात् ॥ ३५ ॥
चाटुरित्यामदद्धूर्तः स्नेहकोमलया गिरा ।
सुंदरि त्वयि दृष्टायां मयि स्यात्स्नेहवर्धनम् ॥ ३६ ॥
न जानीमो विशालाक्षि कारणं त्वत्र कर्मणि ।
किं वा जन्मांतराबद्धो स्नेहोऽद्याप्यनश्चिप्यति ॥ ३७ ॥
साचादीच्चेदिदं संस्था वर्तते तव चेतसि ।
तदा त्वमेव मे भर्ता नान्यमान्याहमः क्वचित् ॥ ३८ ॥
ततस्तौ दंपती जातौ स्नेहबद्धैः (द्धौ) परस्परम् ।
कामलीलां प्रकुर्वंतौ यथेच्छं सुरतप्रियौ ॥ ३९ ॥
ततःप्रभृति कालोऽगात्कियान्वाद्युतरस्तयोः ।
एकदा सापि स्नुष्या स्यात्सार्धमन्येन कामिना ॥ ४० ॥
अथ द्वाभ्यां रतं मुक्ते सा जलसस्सरवासिनी ।
निर्लज्जा निर्घृणा पापा मायामिथ्याभिर्भाषिनी ॥ ४१ ॥

मनस्यन्यद्वचस्यन्यत्कार्ये कुर्वन्ति पापिताः ।
अहो क्वापि न कर्तव्या विश्वासस्तासु पण्डितैः ॥ ४२ ॥
एकदा मथुरां गन्तुं प्रस्थितः कश्चन सार्थिकः ।
निगूह्य सौम्यमार्गेण भार्यया सह तस्थिवान् ॥ ४३ ॥
सायाह्ने स गतः शीघ्रं तस्करस्कन्धसंनिधिम् ।
क्रोधाविष्टो महारौद्रमूर्तिर्दुश्चरितस्तयोः ॥ ४४ ॥
तस्करस्य महापापी शृणु साश्चर्यकारिणीम् ।
रामां कश्चित्समागत्य रमते मामकीं वधूम् ॥ ४५ ॥
अथ चैवं कथंचित्तं सभा भर्तुं निशीथिके ।
तदा ते स्वर्णकाम स्यादित्युक्त्वा स गृहेऽगमत् ॥ ४६ ॥
क्रमात्प्राप्ते निशीथेऽस्य प्रागमैव स्थितस्तदा ।
यः पूर्वोपपतिस्तस्या द्रष्टुं तच्चरितं स्वयम् ॥ ४७ ॥
अथागता भार्या तस्या द्वितीयोपपतिः शनैः ।
तद्वाक्यात्सा समुत्थाय तत्समीपं गतेश्वरी ॥ ४८ ॥
तत्र नीता मराक्षीर्मध्ये यावत्कामातुरेण सा ।
तावद्यामस्तूर्णं प्राप्तोद्ध तस्करस्यकः ॥ ४९ ॥
तत्र कोलाहले जाते सा दुष्टा कपटान्विता ।
पुनर्व्याघुट्य सुष्वाप पूर्वोपपतिसंनिधौ ॥ ५० ॥
आगतास्ते महारौद्रास्तस्करक्षकभृत्यकाः ।
रूक्षुः कोऽत्र गृहे तिष्ठेद्वितो वा तस्करोऽथवा ॥ ५१ ॥
द्वितीयोपपतिर्वेगाद्दुर्वाक्यम्यपर्यंतु भीतः ।
न जाने घूर्णमानोऽगो (ऽर्गो) निद्रयाहं प्रघूर्णितः ॥ ५२ ॥—

इतोऽभूत्तस्तवो दृष्ट्वा चतुः पूर्वपतिः शठैः ।
सोऽयं येनोक्तमेवैतत्सार्यं चेति चदत्यपि ॥ ५३ ॥
तं नीत्वाशुभ स्वस्थान घातयतः पदे पदे ।
यष्टिमुष्टिप्रहारैश्च महानिर्दयमानसा[१] ॥ ५४ ॥
अथ सा चिंतयामास मम श्रेयः पलायनम् ।
अन्यथा निग्रहोऽस्माकं भविष्यति न संशय ॥ ५५ ॥
विमृश्येति तया जारः शिक्षितः स्वीयभार्यया ।
अथ द्वौ दंपती भूत्वा गंतुं सार्द्धं समुद्यतौ ॥ ५६ ॥
नीत्वाथ यद्गृहे किंचिद्वस्त्रालंकरणादिकम् ।
उत्तमं बहुमूल्यं च जारेणामा चचाल सा ॥ ५७ ॥
मार्गेऽन्यदा नदीं प्राप्य पतिमन्योऽव्रदत्तदा ।
प्रिये वस्त्रादिकं मह्यं दत्स्वाशु विश्वकया ( क्रिया ) ॥ ५८ ॥
समुत्तीर्य गते पारे स्थापयामि सुनिश्चलम् ।
एकत्र सुस्थिते स्थाने वस्त्रालंकरणादिकम् ॥ ५९ ॥
पश्चाद्‌गत्य स्वस्कंधे त्वामारोप्य प्रयत्नतः ।
वेगादुत्तारयिष्यामि निश्चयस्पृहतया प्रिये ॥ ६० ॥
स्वयं धूर्तापि विश्वासान्मन्यमाना तथैव सा ।
ददौ स्वर्णादिकं तस्मै मतीता पतिबुद्धितः ॥ ६१ ॥
सा स्वयं नग्निका भूत्वा तस्थावर्धीकृतटं क्वचित् ।
बीभत्सा निस्त्रपा रूपा डाकिनीव भयंकरा ॥ ६२ ॥
अथावतीर्य गत पारे तस्यास्थोपपतिर्जवात् ।
नागतः पुनरत्रासौ मेतुमेकाकिनीमिमाम् ॥ ६३ ॥

१ अमानता ।

सामाय रे महाधूर्त मां मुक्त्वेह गतं त्वया ।
तेनोक्तं रे त्वस्व सम तिष्ठ त्वं पापशालिनि ॥ ६४ ॥
एतस्मिन्नन्तरे कश्चिज्जम्बुकः समुपागतः ।
वस्तुच्छ पाशपमाशु मांसखंडं मुखे दधन् ॥ ६५ ॥
जलादुच्छ (त्य) स्थितं मत्स्यमेकं दृष्ट्वा स जम्बुकः ।
धावति स्म महालाभान्मुक्त्वा मांसं मुखे स्थितम् ॥ ६६ ॥
तावन्मरैति यावत्स मत्स्योऽगाद्वारिमध्यगः ।
मांसपिण्डमितो गृध्रो नीत्वागात्काननान्तरे ॥ ६७ ॥
उभयभ्रष्टं तमालोक्य जम्बुकं दैववंचितम् ।
सा कामिनी महाशोकैः परिदीनमन्यमानसा ॥ ६८ ॥
अविचार्य कृतं वै तज्जम्बुकेन कुबुद्धिना ।
मुक्त्वा स्वाधीनमप्येतत्परायत्तं समीच्छता ॥ ६९ ॥
पार स्थिताऽवधूर्तो धर्ममिह्वधने तथा ।
त्वयापि किं कृतं मूर्खे पश्यात्मानं सुनिश्चिता ॥ ७० ॥
अयं तिर्यग् न जानाति वाच्यावाच्यं हिताहितम् ।
त्वं विदग्धा स्वभर्तारं हत्वा चान्यरतामभवत् ॥ ७१ ॥
तद्भयमिति तां मुक्त्वा धूर्तोऽगात्स्वीयसद्मनि ।
तदा साचीमुखी जाता नारी लज्जापरा यथा ॥ ७२ ॥
तथा त्वमपि मा गच्छ भागिनयाऽपहास्यताम् ।
त्यक्त्वा हस्तस्थितां लक्ष्मीमिच्छन् दूरे स्थितामहो ॥ ७३ ॥
ऊचे जंबूकुमारोऽसौ परकथां श्रुतिपेशलाम् ।
प्रसरद्दशनज्योतिरुद्योतितनिजाश्रयः ॥ ७४ ॥

आसीद्वणिक्सुतः कश्चिद्दारिद्र्यव्यवसायवान् ।
एकदा पोतमारुह्य सोऽगाद्द्वीपांतरं क्वचित् ॥ ७५ ॥
सर्वं वस्तु सुविक्रीय रत्नमेकं समग्रहीत् ।
ततः स्वगृहमुद्दिश्य चचाल वणिजां वरः ॥ ७६ ॥
चिंतयन्निति स्वे चित्ते कार्यसंदोहमीदृशम् ।
हस्ते संस्थाप्य तद्रत्नं विलोकयन्मुहुर्मुहुः ॥ ७७ ॥
वेलाकुलमितं प्राप्य विक्रियेऽहं महन्मणिम् ।
ग्रहीष्यामि गजाश्वादि विविधं वस्तु सुंदरम् ॥ ७८ ॥
ततो नृपसमो भूत्वा यास्यामि निजपत्तनम् ।
श्रिया च शोभया पूर्णो मंत्रिभृत्यादिसेवितः ॥ ७९ ॥
तथापि स्वगृहे स्थित्वा जीविष्यामि सुखं यथा ।
आरुह्य सप्तभौमादि पश्यन् योषित्सु सस्मितम् ॥ ८० ॥
एवं चिंतयतस्तस्य यावद्रत्नमपीपतत् ।
हस्तादब्धौ प्रमादाद्वा दुर्दैवाद्वा महाघमा (?) ॥ ८१ ॥
मोघीभूतास्ततस्तस्य चिंतिताश्च मनोरथाः ।
न लभ्यते महारत्नं हाहाकारं प्रकुर्वता ॥ ८२ ॥
तथाहं न भविष्यामि मातुल त्वमतोऽहं भो ।
त्यक्त्वा धर्मफलं सौख्यं तुच्छं भुंजामि संप्रति ॥ ८३ ॥
इत्युत्तरप्रदानेन स्वामिना कथितेन वै ।
निरस्तो मातुलो नाम्ना चौरो विद्युच्चरोऽभवत् ॥ ८४ ॥
पुनराह कथामेकां दस्युर्विद्युच्चरस्तदा ।
हतोऽपि मुरजो नूनं करोति मधुरध्वनिम् ॥ ८५ ॥

तद्यथा मातुलः कश्चिच्छिक्षाऽप्यासीदनुधरः ।
नाम्ना दृढप्रहारीति विख्यातो संयमस्थिति ॥ ८६ ॥
वनैकदा हतो धन्वा कुञ्जरो प्राणसंहतः ।
वारि पातुं तृषाक्रान्तः समागच्छन् जलाशय ॥ ८७ ॥
दैवात्सोऽपि मृतो विद्धो दष्टः सर्पेण तत्क्षणात् ।
अथ साऽपि धनुर्घातान्मृतमाशु भुजंगमः ॥ ८८ ॥
मृतेष्वेतेषु जीवेषु गजाभिल्लाहिषु स्फुटम् ।
आगतस्तत्र गोमायुः क्षुधितः काननादित ॥ ८९ ॥
पतितं चापि वीक्ष्याशु गजं भिल्लं सरीसृपम् ।
धनुश्चापि स हृष्टांगो जातो लोभाद्दुरुत्तया ॥ ९० ॥
चिंतति स्माथ गोमायुः कुंजरोऽयं मृतो महान् ।
भक्षयिष्यामि षण्मासं यावदन्नं सुनिश्चयम् ॥ ९१ ॥
ततो मासैकपर्यंतमहं नरकलेवरम् ।
ततोऽप्येकदिनं यावत्सर्पं भक्ष्यास्मि निश्चितम् ॥ ९२ ॥
इमे यथास्थिताः सर्वे तिष्ठंतु कुंजरादयः ।
तावदद्य मया भोग्या ज्याबद्धा गुण एव हि ॥ ९३ ॥
इति तं भक्षमाणोऽसौ गोमायुः पापपाकतः ।
मृतस्तुच्छधराघाताद्धनुस्फोटेन दुःखितः ॥ ९४ ॥
यथा बहुसुखं वाञ्छन् गोमायुर्मृत्युमागमत् ।
तथा त्वमैहिकं सौख्यं स्वपत्या मा गच्छ हास्यताम् ॥ ९५ ॥
मातुलोक्तं ततः श्रुत्वा प्रोच जम्बूकुमारकः ।
किंचित्कथांतरं रम्यं भवितान्ययविवित्सया ॥ ९६ ॥

१ नौ निष्ठन्तु वाम विनोति [illegible]।

एकः कर्मकर कश्चिदासीद्दतिदरिद्रवान् ।
वनादिन्धनमानीय विक्रीय कुरुतेऽशनम् ॥ ९७ ॥
अथैकदा महाभारं नीत्वा स्कन्धे कथंचन ।
मतस्थे धत मध्याह्न स्वालय प्रति यत्नतः ॥ ९८ ॥
भाराक्रांतोऽथ पापात्मा तप्तवाह्लश्च तृष्णया ।
सुप्तं सुष्वाप श्रांतः सभपभारस्तरोरध ॥ ९९ ॥
सुप्त स स्वप्नमद्राक्षीभिद्रया कर्मकारकः ।
साम्राज्यपदमारूढं स्वात्मानं समपश्यत ॥ १०० ॥
आसीनं विष्टरे रम्ये मणिमौक्तिकभूषिते ।
चलच्चामरसंपातैर्वीज्यमानं मुहुर्मुहुः ॥ १०१ ॥
वंदिवृंदजयाराव स्तूयमानं मनोहरे ।
क्वापि यौवतमध्यस्थ कालकेसिरसाकुलम् ॥ १०२ ॥
गमाभादिपरीवारैर्वेष्टिते राममंदिरे ।
अभ्यंतरे स पादाभ्यां ताडितो यष्टिमुष्टिभिः ॥ १०३ ॥
भार्यया स्वस्य समेत्य क्षुपापीडितया बलात् ।
उत्थितो जागरूकः स चिंतयामास कर्मकृत् ॥ १०४ ॥
केयं लक्ष्मीः क्व साम्राज्य दृष्टनष्टं क्षणादपि ।
तद्वन्नाम कलत्रादि स्वप्नसाम्राज्यसन्निभम् ॥ १०५ ॥
मानीहि क्षणिकं सर्वं सद्यस्प्राणापहारि च ।
मत्वेति नाम को धीमान् जनो दुःखाकर्य भ्रमेत् ॥ १०६ ॥
त्यक्त्वा स्वात्मीस्थिरं सौख्यं जन्ममृत्युविनाशकृत् ।
जंबूस्वामिकथां श्रुत्वा मोचे विद्युच्चरः सुधीः ॥ १०७ ॥

१ कुमतीनां समूहः ।

यामिनीपश्चिमे भागे तुर्ये चापि कथानकम् ।
एकः कश्चिन्नरो१ऽभिज्ञो कलाविज्ञानकोविदः ॥ १०८ ॥
आसीदत्र सुविख्यातो यथानामा कुतूहली ।
अथैकदा नृपस्याग्रे ननर्त बहुकौशलात् ॥ १०९ ॥
नर्तकीभिः समाकीर्णः सार्धचारिभिरप्यसौ ।
तन्नृत्यं पश्यता राज्ञा प्रसन्नमनसा तदा ॥ ११० ॥
दत्तं स्वर्णादिकं तस्मै पट्टकूलादिकं तथा ।
राज्ञः प्रसादं नीत्वा ते सुषुपुस्तत्र निद्रया ॥ १११ ॥
रजन्यां जागरूकत्वात्सुप्तसमका नटाः ।
अथ सुप्तेषु तेषूच्चैर्नर्तकपादिमनेप्याति ॥ ११२ ॥
तन्मध्येऽस्तदा तस्थौ जाग्रन्नेव स पापधीः ।
जाग्रता चिन्तितं तेन पंचकृत्वापियाऽपिपा ॥ ११३ ॥
नीत्वा हेमादि सर्वस्वं गच्छामि नीचस्वैर ।
यथोत्तमं कृतं तेन नीत्वा सर्वस्वमञ्जसा ॥ ११४ ॥
गंतुकामो धृतस्तूर्णं जाग्रद्भिर्नर्तकीजनैः ।
चौरत्वेनाभियुक्तस्तैर्नीतो भूपस्य सन्निधिम् ॥ ११५ ॥
दृष्ट्वा रुष्टेन भूपेन कृतं चौरोचितं हि यत् ।
तद्दृष्टं भागिनेयाहो जम्बूस्वामिन्महामते ॥ ११६ ॥
मागाऽहर्षलाभाय श्रीप्यानस्थां कथापन ।
जम्बूस्वामी निशम्यैतन्मातुलोक्तं कथान्तरम् ॥ ११७ ॥
किंचित्कथोत्तरं रम्यं प्रोवाच प्रतिभान्वितः ।
वाराणस्यां सुविख्यातो भूपोऽप्यासीन्महत्तरः ॥ ११८ ॥

१ वानरो ।

आस्थया लोकपालोऽसौ राज्यभारधुरंधरः ।
तस्य राज्ञी तु नाम्ना स्याद्रूपाढ्या मनोरमा ।
कंदर्पस्य धनुर्यष्टिर्जिगीषोरिव भूपते ॥ ११९ ॥
अथान्येद्युः स भूमीशो जगामाशु सलीलया ।
आखेटकक्रियासक्तो धन्यारंतु वनांतरे ॥ १२० ॥
अत्रांतरे महाराज्ञी राज्ञस्तस्य मनोरमा ।
कामुकी रंतुकामासीत्कामबाणैर्निपीडिता ॥ १२१ ॥
दूतीं कांचित्समाहूय विदग्धामभिसारिकाम् ।
चित्तस्थं गूढमाकूतं सानुरक्तामवेदयत् ॥ १२२ ॥
मातर्मां च विमानीहि तदार्तां सोढुमक्षमाम् ।
कातरां कुपिते कामे त्वयि तत्परमानसाम् ॥ १२३ ॥
तत्त्वं मे शरणं भूयाः सोपता मदनज्वरे ।
आनयस्वाशु गत्वाथ सुंदर तरुण नरम् ॥ १२४ ॥
तत सोचे महापापा दूती साहसिकं वचः ।
मय्यत्र सानुकूलायां मा वौरुप्यं कुरु सुंदरि ॥ १२५ ॥
आनयामि स्ववार्ताभिर्निष्काममपि योगिनम् ।
का कथा नरकीटानां कामाज्ञावशवर्तिनाम् ॥ १२६ ॥
अंतरे दैवयोगाद्वै स्वसौधस्थितया तया ।
दृष्टः कोऽपि युवा वीथ्यां पर्यटंस्तत्र लीलया ॥ १२७ ॥
नाम्ना पंग इति ख्यात स्वर्णकारो रसोत्कः ।
अयमेवोचितो रंतुं तया चेत्यवलक्षित ॥ १२८ ॥
दृष्ट्वा तं मृगशावाक्षी दूतीं मत्वाह पुंश्चली ।
एनमानय सोपायैर्जीवनस्य कृते मम ॥ १२९ ॥

---

१ मूलस्य नाम पोतकः ।

भवस्थे सा तदादेशात्पुत्री मायान्विता सती ।
आनयामास तं भगात्स्थिता यत्र मनोरमा ॥ १३० ॥
सा राज्ञी रंतुकामा तं यापयीत्वा स्वसद्मनि ।
शय्यातले समायाता सस्मरा सुरतोत्सवा ॥ १३१ ॥
तावदेवाक्रमात्स्वा नृपोऽप्यत्र समागतः ।
धृतातपत्रसच्छाया वीज्यमानः सुचामरैः ॥ १३२ ॥
आगच्छंतं तमालोक्य राजानं स्वर्णकारकः ।
व्याकुलोऽभूद्भयाक्रांतः कंपमानो मुहुर्मुहुः ॥ १३३ ॥
गोपयित्वा तथा पीनं कौशल्यात्पूर्वरूपक ।
सन्मुखीभूय भूपालः क्रीडामीतः स्वसद्मनि ॥ १३४ ॥
कामासक्तः स भूमीशः पल्यार्कं स्थितवानिह ।
मनोरमां सुखांभोमग्नामभ्यमधुमत ॥ १३५ ॥
भोजनस्य कृते तत्र ग्रासमात्रं प्रयत्नतः ।
मुक्तोच्छिष्टच्छटाद्येव क्षिपति स्म मनोरमा ॥ १३६ ॥
एवं पापस्य पम्मास विप्रस्तत्रातिदुःखितः ।
पांडुरोगी महापापाज्जातो दुर्गंधवासितः ॥ १३७ ॥
अथ भूपाज्ञया नीचः कूपे प्रक्षालिते जलैः ।
धंग प्रणालिकाद्वाराभिर्गत्वागात्सरित्तटे ॥ १३८ ॥
तत्रस्थे सवस्त्रकेण पृष्टः सार्द्रमानसे ।
कोऽसि त्वं ते कथं पांडु जातं कांचनसन्निभम् ॥ १३९ ॥
यंगनीतकमर्गा लोका मसीन्द्रियामसोफनात् ।
मोक्षं पातालकन्याभिनीतोऽस्य परमादरात् ॥ १४० ॥

ततश्च गन्तुकामं मां ज्ञात्वात्मीयगृहान्मुसम् ।
चक्रुर्वैमनस्यमत्यर्थं कोपाक्रान्तास्तु ताः स्त्रियः ॥ १४१ ॥
निसर्गतोऽपि यत्सत्यं न वदति कदाचन ।
किं पुनः कारणं प्राप्य तथया स्वर्णकारकः ॥ १४२ ॥
तत्राथापि क्रमादेव कृच्छ्रात्तच्छर्मैर्गृहं प्रति ।
आगतर्मंगनामासौ कथकथमिवास्महा ॥ १४३ ॥
तत्रानाशमयावैर्नीतः सौरभ्यमादरात् ।
सुगन्धद्रव्यसंयोगे शौमनांगोऽप्यथयथा ॥ १४४ ॥
अथैकदा गतस्तत्र वीथ्यां कार्यवशादिह ।
राजसौधसमीपस्थो दृष्टः साऽपि तया स्त्रिया ॥ १४५ ॥
तयैव सत्वरा साथ चेंगमुद्दिश्य संज्ञया ।
आगच्छागच्छ भो भूयोऽप्यकरो मम सद्मनि ॥ १४६ ॥
चेंगेनोक्तमस्तं स्नेहैस्त्वादकीयैः सखेऽधुना ।
यस्मात्तं त्वद्गृहादुःखं विस्मरामि न तत्क्षणम् ॥ १४७ ॥
अथापि न तन्मरेहादौर्गन्ध्यं याति सर्वतः ।
उपसर्गाद्विमुक्तोऽहं नाविमृश्यं करोम्यतः ॥ १४८ ॥
तद्भार्ये भविष्यामि सुखलेशस्य हेतवे ।
तिर्यगादिगतिष्वाहो मातृपितृदुःखसमागमम् ॥ १४९ ॥
बहुमन्यपितेनालं मातुल त्वमवैहि भो ।
नारमाद्यं सुखं भुंजे समाधानशतैरपि ॥ १५० ॥
ज्ञात्वा विद्युच्चरो वस्तुः कुमारं दृढमानसम् ।
स्तुतिं चक्र मुनिर्धीर्ण्णं सोऽप्यासन्नभवः स्वतः ॥ १५१ ॥

ततस्तत्याज वस्त्राणि भूरुणानीव निजान्वयात् ।
फलानीव मायायाः क्षणादेव विचक्षणः ॥ ५० ॥
सुधाटं कण्ठसूत्रं च दन्तिं मणिखचितं ।
इदं बन्धनमस्येव संसारस्य महाद्विपः ॥ ५१ ॥
ततः कुंडलयुग्मं च न्यक्कृतं कर्णयोः स्थितं ।
पुण्डरीकस्येव चक्रयुग्ममिवाधुना ॥ ५२ ॥
कचलोचः कृतस्तेन कराभ्यां स्वस्य लीलया ।
पंचमुष्टि यथाम्नायमात्मभावरभिति ॥ ५३ ॥
सदर्भांगीकराति स्म गुरोरादतः क्रमात् ।
शुद्धान्मूलगुणान्सम्यानष्टाविंशतिसंमितान् ॥ ५४ ॥
महाव्रतानि पंचैव स्मृताः समितयस्तथा ।
इंद्रियाणां निरोधश्च पंचपंचेति प्रकीर्तिताः ॥ ५५ ॥
लोचभक्ता गुणी मुख्या षाडावश्यकसत्क्रिया ।
अचेलत्वं ततः प्रोक्तं शुद्धचारित्रधारिभिः ॥ ५६ ॥
अहिंसाव्रतसिद्ध्यर्थं यतीनां स्नानवर्जनम् ।
प्राशुकावनी शयनं वैराग्यादिविवृद्धये ॥ ५७ ॥
दंतधावनादिभागश्च विरागाणामनुत्तमः ।
गत्स्थपाविक्रिया चापि कर्तव्या न यतीश्वरैः ॥ ५८ ॥
कायोत्सर्गेण भोक्तव्यं स्थितिभोजनमेकशः ।
किंचनं देहसिद्ध्यर्थं न मार्गार्थं कदाचन ॥ ५९ ॥
एते मूलगुणाः प्रोक्ताः श्रमणानां जिनेश्वरैः ।
संख्योत्तरगुणाश्चापि लसाशतुरशीतिकाः ॥ ६ ॥

सर्वेऽप्यामरणं नीत्वा पालनीया मुमुक्षुभिः ।
एवत्समुदितं सर्वं निर्मितं स्यान्मुनिव्रतम् ॥ ६१ ॥
इत्युक्तं गुरुणा स्वेन गुरुणा सद्गुणैरपि ।
श्रुत्वा जम्बूकुमारोऽसौ सर्वं जग्राह शुद्धधीः ॥ ६२ ॥
ततो जयजयाराव चक्रुः सर्वेऽपि सम्मुदा ।
श्रेणिकप्रमुखा भूपाः सर्वे पौरजनास्तथा ॥ ६३ ॥
ततः केचित्तु भूपालाः शुद्धसम्यक्त्वभूषिताः ।
बभूवुर्मुनयो नून यथाजातस्वरूपकाः ॥ ६४ ॥
केचिन्मोहाद्वतेस्तत्र क्लीबत्वेन कदर्थिता ।
श्रावकस्य व्रतान्युच्चैस्तेऽपि जगृहुः सादरात् ॥ ६५ ॥
अथ विद्युच्चरो दस्युर्विरक्तो भवभोगतः ।
सर्वसंगपरित्यागलक्षणं व्रतमग्रहीत् ॥ ६६ ॥
सार्धं पंचशतैर्भूपपुत्रैरासीत्स सयमी ।
दस्युकर्मरतैः सर्वैः प्रभवादिसुसंज्ञिकैः ॥ ६७ ॥
अतः परं मुनिर्विष्णुः सोऽर्हद्दासो वणिग्वरः ।
सकलार्थं गृहं त्यक्त्वा स्रष्टोऽभून्मुनिकुंजरः ॥ ६८ ॥
सुधर्मा(र्मा)र्यिका पार्श्वे माता जिनमती ततः ।
संसारासारतां मत्वा स्यादार्यिका (याः) व्रतान्विता ॥ ६९ ॥
पद्मश्रीप्रमुखा वध्वो वीक्ष्य संसृतिसंस्थितिम् ।
सुधर्मा गणिनीं नत्वा गृह्णंति स्म तपो महत् ॥ ७० ॥
प्रणम्याशु तत सर्वान् सौधर्मादिमुनीश्वरान् ।
जग्मुः श्रेणिकभूपाद्याः मतिसंभ्रमसमुत्सुकाः ॥ ७१ ॥

अहो स्वामिन्महो भ्रात धन्योऽसि त्वं जगत्त्रये ।
मादृशां का कथा नाथ त्वं पूज्योऽसि द्युसद्भिरपि ॥ १५२ ॥
संसारमहार्णवे पारं प्राप्तोऽसि त्वं महामते ।
धर्मकल्पतरोर्मूले त्वं भेत्ता कर्मभूभृताम् ॥ १५३ ॥
इत्यादिस्तवनं कृत्वा तेन विद्युच्चरेण वै ।
निक्षिप्तमात्मनश्चाग्रे गदितं तस्करादिकम् ॥ १५४ ॥
अत्रांतरे द्विमासीत्याग्रकवर्णा सुभास्वरा ।
जम्बूकुमारसंत्यक्ते रागैर्वातैरिवाग्निः ॥ १५५ ॥
केचित्तस्यद्रुपस्तंभे ध्यानसंलीनमानसाः ।
कायोत्सर्गपरा भव्या बभूवुः परमादरात् ॥ १५६ ॥
कश्चिद्धर्मिभिर्जिनेशानां पूजां कर्तुं समुद्यताः ।
गंधधूपादिसामग्रीं स्वीकुर्वाणा यथास्वरम् ॥ १५७ ॥
ततो वेगाद्देवेति स्म भानुमानुदयाचलात् ।
स्वामिनं द्रष्टुमौत्सुक्यादुद्यमप गर्भस्तिभिः ॥ १५८ ॥
यत्प्रसादान्महासत्त्वा शुमति सुलभमच्युतम् ।
शक्रचक्रपदं चैव सभ्यो धर्मः स धार्मिकैः ॥ १५९ ॥

इति श्रीजम्बूस्वामिचरिते भगवच्छ्रीपश्चिमतीर्थकरोपदेशानुसारेण स्याद्वादानवद्यगद्यपद्यविद्याविशारदपण्डितराजमल्लविरचिते साधु पासात्मजसाधुटोडरसमभ्यर्थिते विद्युच्चरकथा-चतुष्कवर्णनो नाम एकादश पर्व ।

१ विरतैः ।

# अथ द्वादश॰ पर्व ।

श्रियमस्तु सदा तुभ्यं जैनशासनशासनात् ।
साधुपासांगमस्यास्य सव श्रीसाधुवाक्टर ॥ १ ॥ इत्याशीर्वाद ।

नमिं नमस्सुराधीश पञ्चकल्याणभागिनम् ।
नेमिं धर्मरथस्येव नेमिं नौमि जगद्गुरुम् ॥ १ ॥

अथ प्रभातसमये यद्भूच्छ्रेष्ठिनो गृहे ।
प्रवक्ष्यामि तदेवोच्चैर्यथाश्रुतमनुक्रमात् ॥ २ ॥

नैवं तस्य कथावृत्तमश्रौषीच्छ्रेणिको नृपः ।
अर्हद्दासेन सप्रोक्तं स्वतो गत्वा नृपालयम् ॥ ३ ॥

तत्र वैलक्ष्यमासाद्य सान्द्रक्लेशवशान्नृपः ।
धर्मबुद्ध्या पुनः सोऽथ जातमानंदनिर्भरः ॥ ४ ॥

नेदुर्दुंदुभयस्तत्र श्रेणिकस्याज्ञया तदा ।
केवलज्ञानसाम्राज्यपदप्राप्तिर्यथा परा ॥ ५ ॥

मङ्गलानकनादैश्च व्याप्ता भुवनपस्तदा ।
कल्याणेष्वेष तीर्थेशां व्योममार्गे यथामरैः ॥ ६ ॥

आगत श्रेणिकश्च भूपः सोत्सुकः श्रेष्ठिनो गृहे ।
स्वदारैः सकुटुम्बश्च वंदितुं स्वामिपंकजम् ॥ ७ ॥

नवनम्राद्विचेष्टाभिर्निर्विकाराभिरस्य वै ।
धीरं वैराग्यमारूढं स्वामिनं सोऽप्यभिज्ञपत् ॥ ८ ॥

ज्ञात्वा स भूषयामास स्वामिनं भूषणादिभिः ।
जानन्नपि विरागं तं भावशुद्ध्यर्थमात्मनः ॥ ९ ॥
चंदनाद्यैरङ्गरागं चर्चितं स्वामिना बभौ ।
यथा मेरौ जिनस्यास्य मूर्ध्नि चामरैर्षिणा ॥ १० ॥
सश्वेतवस्त्रं स्थिरस्थस्य शोभामापातिशायिनीम् ।
स्वयंवराय मुक्तिश्रीकामिन्या इव संस्कृतम् ॥ ११ ॥
ततः सानुमतिर्भूत्वा भूपतिः श्रेष्ठिना सह ।
शिबिकायां स्वहस्ताभ्यां स्थापयामास स्वामिनम् ॥ १२ ॥
वन गन्तुं समुत्सुकं स्वामिनं तपसः कृते ।
सर्वः पौरजनस्तत्रागमद्दीक्षितुमादरात् ॥ १३ ॥
सप्तकार्याण्यतीत्यापि यावन्ती जनसंहतिः ।
अद(दृ)ष्टमिव तं द्रष्टुमाजगाम सकौतुकात् ॥ १४ ॥
मुक्तिमार्गोत्सुकोऽसौ सिद्धिसौख्याभिलाषवान् ।
धन्योऽयमिति सर्वेऽपि जजल्पुश्च परस्परम् ॥ १५ ॥
हाहाकारो महानासीत्तदा राजगृहे पुरे ।
केचित्तत्स्नेहसंसक्ता मुमूर्छुरिव दुःखिताः ॥ १६ ॥
अत्रान्तरे समायाता माता जिनमती सती ।
स्वपदमुसमाकर्ण्य गतश्च स्वामिजल्पति ॥ १७ ॥
प्रतीक्षस्व क्षणं यावत्त्वं मां मातरं प्रति ।
इति दीनगिरं मोहादुच्चैरसौ मुमूर्च्छया ॥ १८ ॥
नष्टचेष्टामिवालोक्य जम्बूं तावद्भूमनः ।
विललाप महामोहात् सशोका गिरमुच्चरन् ॥ १९ ॥

हा नाथ मन्महाप्राण हा कंदर्पकसुन्दर ।
अनाथा वयमद्याहो विनाप्यागःकृता कथम् ॥ २० ॥
पित्रैर्वं येन दृष्टास्य तपसे बुद्धिरुत्कटा ।
पश्यता स महादुःखे तत्कारुण्यमकुर्वता ॥ २१ ॥
अद्यापि भो कृपानाथ प्रसीद कुरु मार्दवम् ।
भुङ्क्ष्व भोगाश्च भोगायामित्यूचुस्ताः प्रियास्तदा ॥ २२ ॥
रेजुर्यथ कथं नाथ त्वां विना दीनवृत्तयः ।
यथा चन्द्राहते रात्रिरिति दीनागिरश्च ताः ॥ २३ ॥
ततः सोपायमालम्ब्य चंदनादिद्रवैरपि ।
यत्नैर्जिनमती नीता ताभिश्चतनयां तदा ॥ २४ ॥
सावधाना तदा प्रोचे माता जिनमती सती ।
धीरवैराग्यमारूढं स्वामिनं माति मभयात् ॥ २५ ॥
क्वेदं तव वपुर्वत्स कदलीगर्भकोमलम् ।
खड्गधारानिभं पुत्र क्वेदमुग्रतरं तपः ॥ २६ ॥
अंगुष्ठप्रज्वलिता यद्वियथा याति भस्मसात् ।
तथा त्वं विजानीहि तस्मादप्यतिरिक्तकम् ॥ २७ ॥
कर्तुं भूशयनं बाल कथं धर्मोपि दुःसहम् ।
बाहुमुख्छीपकं कृत्वा गमिष्यसि कथं निशाम् ॥ २८ ॥
अप्यास्तां (हि) परित्यज्य पितरौ कामलालयौ ।
विना मा (?) दुःखितां कृत्वा कथं यासि वनान्तरं ॥ २९ ॥
इमा वध्वस्तवसाऽपि त्वामृते दुःखपूरिताः ।
एकाकिन्यो न शोभंते भर्तृशून्याः प्रिया इव ॥ ३० ॥

इत्यादिबहुधासंकल्पविकल्पवीचिमातुराम् ।
मातरं प्रति प्राचाच जम्बूस्वामी स्वाशयः ॥ २१ ॥

मातः श्रोतुं यदीति त्वं कातरत्वं परित्यज ।
भावयाशस्त्रमेवैषामनित्यां संसृतिस्थितिम् ॥ २२ ॥

आदौ वैषयिकं सौख्यं यावद्दुःखान्वितं मया ।
बहुशोऽपि यतस्तद्धि न समीहामहे वयम् ॥ २३ ॥

स्वर्गेऽपि यन्महाभागैर्भोगातृप्तिमयं जनः ।
एभिः स्वमनिमेषैर्मर्त्यैः स कथं तृप्तिमाप्नुयात् ॥ २४ ॥

न जाने कियतो वारानभवं नारकः सुरः ।
तिर्यञ्चापि नरश्चाहं भूत्वा भूत्वा पुनः पुनः ॥ २५ ॥

उक्तं च—

" कति न कति न वारान् भूपतिर्भूरिभूतिः
कति न कति न वारानत्र जातोऽस्मि कीटः ।
नियतमिति न कस्याप्यस्ति सौख्यं न दुःखं
जगति तरलरूपे किं मुदा किं शुचा वा ॥ १ ॥ "

इति प्रभृतिवाक्यादिरुचितैरमृतोपमैः ।
मातरं प्रतिबोध्याशु निरगात्स निजास्पदात् ॥ २६ ॥

गच्छन्ननुव्रजन् रेजे तदासौ पितृसौधतः ।
गुर्वर्घनस्पर्धी महामम [illegible] द्रुतम् ॥ २७ ॥

स्तुवंति स्म तदा सुराः सर्वेऽप्यासन्नभव्यकाः ।
तृणाय मन्यमानं तं पदं साम्राज्यसम्भवम् ॥ २८ ॥

भयानदसमायुक्तै श्रेणिकादिनृपादिभिः ।
शिबिकायां स्थितो नीतो हस्ताद्दस्ते स काननम् ॥ ३९ ॥
फलपुष्पसमाकीर्णमकालेऽपि फलोदयम् ।
तदा तत्काननं रेजे किंचिन्मुग्धविक्षेपकम् ॥ ४० ॥
अलिक्षोदूतश्वासाग्रेमसम्मानैरितस्ततः ।
जम्बूस्वामिकुमारस्यागमं नृत्यमिवातनोत् ॥ ४१ ॥
तमर्थ्य मुनिमानम्य गुरुं सौधर्मसंज्ञकम् ।
उपविष्टो यथास्थानं कुमारोऽभिमुखं मुनेः ॥ ४२ ॥
तत्पदाग्रे स विन्यस्य कुड्मलीकृतहस्तकम् ।
तेन जम्बूकुमारेण विज्ञप्तो मुनिरादरात् ॥ ४३ ॥
कृपासागर सद्रूप मामुद्धर भवार्णवात् ।
नानादुःखक्षणावर्तैर्निमज्जंतं कुयोनिषु ॥ ४४ ॥
अथ मे करुणां कृत्वा देहि दीक्षां भवापहाम् ।
पावनीं सस्पृहां सर्वैः कर्मनिर्मूलनक्षमाम् ॥ ४५ ॥
लब्ध्वानुज्ञां स शुद्धात्मा गुरोः सर्वसमक्षतः ।
अंगादुत्तारयामास भूषणानि विरक्तधीः ॥ ४६ ॥
तावत्पुष्पस्रजो मुक्ताः स्वकिरीटाग्रकोटितः ।
दूरीकृता बलादेव मन्मथस्य शरा इव ॥ ४७ ॥
आक्षिपन्मुकुटं मूर्ध्नो हेमया रत्ननिर्मितं ।
मानोन्नत्यमिवात्मीयं निर्मयान्मारभूपतेः ॥ ४८ ॥
ततोऽप्युत्तारयामास हाराद्यस्यापलंकृतान् ।
मुद्रिकादीन्स सद्रत्ननिर्मितानंगतः स्फुटम् ॥ ४९ ॥

ततस्तत्याज वस्त्राणि शल्यानीव निजान्वयात् ।
पटलानीव मायायाः क्षणादेव विचक्षणः ॥ ५० ॥
मुमोच कटिसूत्रं च यन्त्रितं मणिवर्चितं ।
दृढं बन्धनमस्येव संसारस्य महाद्विपः ॥ ५१ ॥
ततः कुण्डलयुग्मं च न्यक्कृतं कर्णयोः स्थितं ।
गुरुश्चरयस्येव चक्रयुग्ममिवामुना ॥ ५२ ॥
कचभारः कृतस्तेन कराभ्यां स्वस्य लीलया ।
पञ्चमुष्टि यथाम्नायमाममधीश्वरामिव ॥ ५३ ॥
ततश्चांगीकरोति स्म गुरोरादरतः क्रमात् ।
शुद्धान्मूलगुणान्सर्वानष्टाविंशतिसंमितान् ॥ ५४ ॥
महाव्रतानि पंचैव स्मृता समितयस्तथा ।
इंद्रियाणां निरोधश्च पंचधैव मनीषिभिः ॥ ५५ ॥
लोचश्चैको गुणो मुख्यः षडावश्यकसत्क्रिया ।
अचेलत्वं ततः साक्षं शुद्धचारित्रधारिभिः ॥ ५६ ॥
अहिंसाव्रतसिद्ध्यर्थं यतीनां स्नानवर्जनम् ।
भूशयना प्रथमं वैराग्यादिविवृद्धये ॥ ५७ ॥
दन्तकाष्ठादिभागश्च विरागाणामनुत्तमः ।
गन्धधूपादिक्रिया चापि कृपाभ्या न यतीश्वरैः ॥ ५८ ॥
कायोत्सर्गेण भोक्तव्यं स्थितिभोजनमेकशः ।
कवलं रससिद्ध्यर्थं न भोगार्थं कदाचन ॥ ५९ ॥
एते मूलगुणाः प्रोक्ताः श्रमणानां जिनेश्वरैः ।
संत्युत्तरगुणाश्चापि लक्षाश्चतुरशीतिकाः ॥ ६ ॥

सर्वेऽप्याभरणं नीत्वा पालनीया मुमुक्षुभिः ।
एवमस्मदिदं सर्वं निर्मितं स्यान्मुनिव्रतम् ॥ ६१ ॥
इत्युक्तं गुरुणा स्वेन गुरुणा सद्गुणैरपि ।
श्रुत्वा जम्बूकुमारोऽसौ सर्वं जग्राह शुद्धधीः ॥ ६२ ॥
ततो जयजयारावं चक्रुः सर्वेऽपि संमुदा ।
श्रेणिकप्रमुखा भूपा सर्वे पौरजनास्तथा ॥ ६३ ॥
ततः केचित्तु भूपालाः शुद्धसम्यक्त्वभूषिताः ।
बभूवुर्मुनयो नूनं यथाजातस्वरूपकाः ॥ ६४ ॥
केचिन्मोहोदयैस्तत्र क्लीबत्वेन कदर्थिता ।
श्रावकस्य व्रतान्युच्चैस्तेऽपि जगृहुः सादरात् ॥ ६५ ॥
अथ विद्युच्चरो दस्युर्विरक्तो भवभोगतः ।
सर्वसंगपरित्यागलक्षणं व्रतमग्रहीत् ॥ ६६ ॥
सार्धं पंचशतैर्भूपपुत्रैरासीत्स तपस्वी ।
दस्युकर्मरतैः सर्वैः प्रभवादिसुसंज्ञिकैः ॥ ६७ ॥
अतः परं सुनिर्विण्णः सोऽर्हद्दासो वणिग्वरः ।
सकलत्रं गृहं त्यक्त्वा ह्यभून्मुनिकुंजरः ॥ ६८ ॥
सुप्रभार्यान्तिका पार्श्वे माता जिनमती तत ।
संसारासारतां मत्वा स्यादार्यिका (याः) व्रतान्विता ॥ ६९ ॥
पद्मश्रीप्रमुखा वध्वो ज्ञात्वा संसृतिसंस्थितिम् ।
सुप्रभा गर्भिणी मत्वा गृहेऽपि स्म तपो महत् ॥ ७० ॥
प्रणम्याशु तत सर्वान् सौधर्मादिमुनीश्वरान् ।
जग्मु श्रेणिकभूपाद्याः भक्तिसंभ्रमसंयुक्ताः ॥ ७१ ॥

कृतार्थं मन्यमान[1] स स्वात्मानं सद्व्रतान्वित ।
कृतोपासोऽविपिस्तत्र स्थितो वाचयमी वने ॥ ७२ ॥
यथाशक्ति समाधाय सेऽपि निःपुवराज्य ।
नीत्वापवासरसंन्यास तस्युर्ध्यानावमर्षिनः ॥ ७३ ॥
सिद्धभक्तिं समार्ध्यते पठित्वाय महामुनिः ।
मवस्यश्चोऽन्य मार्गे पारणार्थं कृतावमः ॥ ७४ ॥
विमन्तामपूः रम्य पुरे श्रामात् स्वसपत ।
अहो पुण्यपदार्थोऽप्यमायातो मूर्तिमानिव ॥ ७५ ॥
आगच्छंतं तमालाक्य दूरादानमप्रसन्नकाः ।
प्रणामुः श्रावकाः सर्वे भयाऽर्थं वीतमत्सराः ॥ ७६ ॥
केचिच्चित्रमिवालोक्य सजनस्युः सविस्मयम् ।
याऽयू (व) प्राग्रणीः पूर्वं सोऽर्थ जातो मुनीश्वरः ॥ ७७ ॥
अहो दैवस्य वैचित्र्य कर्मणो रसपाकतः ।
का वेत्ति किं कथं भावि ज्ञानाद्न्यत्र मारतः ॥ ७८ ॥
कचिद्दानरसाः सक्ताः मतिग्राहितुमुत्सुका ।
तस्युर्मुस्त्वाः स्वधीर्म्यतमार्गोत्साकनवत्सराः ॥ ७९ ॥
वदंति स्म जनाः केचित् स्वामिन्नत्र कृपां कुरु ।
पवित्रीकुरु नो वेश्म चरणाम्बुमरणुभिः ॥ ८० ॥
तिष्ठ तिष्ठात्र मद्गेहे जम्बूस्वामिन्महामुने ।
मासुकान्नं गृहाणाद्य निरवद्यं मचस्या (अपा) पिवम् ॥ ८१ ॥
इतेवागच्छ मद्गृहमिहेवागच्छ मद्गृहम् ।
ऊपुराम्रेडितं मन्ना मिथः केचिदितोऽप्यतः ॥ ८२ ॥

1 भाषेऽपि द्विमिथर्वं इत्यपर ।

काचिद्रूपे वयस्योऽय मन्मथाकारविग्रहः ।
सुंकरांगः कथं कुर्यात्तपो दुष्करमंजसा ॥ ८३ ॥
भगमद्देदनाख्याआत्काचिदर्शी(र्शी)भिरीसहम् ।
कामदेवनिभं देवयकाममपि स्वामिनम् ॥ ८४ ॥
इत्यादिविविधालापैः सपदस्सुमनैष्यपि ।
अगादर्थिस्यइत्यासौ जिनदासस्य सद्यनि ॥ ८५ ॥
नवकोटिविशुद्धं स जग्राहाहारमत्यघः ।
असूदानातिशायित्वात्पचार्य तद्गणे ॥ ८६ ॥
नीत्वाहारं स शुद्धात्मा निरीहाऽपि समीहया ।
कृतेर्यापथसंशुद्धिर्यथाशास्त्रानुसर्न मुनि ॥ ८७ ॥
क्रमादाप वनस्योत पार्श्वे सौधर्मसन्मुनेः ।
सवतः श्रुतपःसिद्ध्यै निर्वाणस्य महौजसः ॥ ८८ ॥
अथ सौधर्मसन्नस्य मुनः कतिपयैर्दिनैः ।
प्रादुरासीत्स्वभावात्य केवलज्ञानमंजसा ॥ ८९ ॥
पादमूलेऽस्य सर्वार्थवदिनाऽनंतधर्मणः ।
चरति स्म तपश्चोग्रं जम्बूस्वामी महामुनिः ॥ ९० ॥
तपोऽनशननन(?)मार्य करोति स्म स सादरात् ।
वेगाद्वास्यविशुद्धयर्थमर्हिसंख्या पुरःसरम् ॥ ९१ ॥
द्वितीयमवमौदर्यं चरति स्म तपो महत् ।
एकग्रासादिकं ग्रंमवमोदर्नं समल क्षमी ॥ ९२ ॥
विधाय सयसंख्यादि यथाशुक्लमथपक्षः ।
वृत्तिसंख्यानमेवैतत्तृतीयं तप आसज्त् ॥ ९३ ॥

---

१ मुक्तिमस्तकः ।

समाचरस्तपस्तुर्यं रसानां परिहापनम् ।
हृषीकाणां निग्रहाय शरीरेकस्य शांतये ॥ ९४ ॥
शून्यागारवनाद्रौ चकार वसतिं वशी ।
तपोऽदः पंचमं नाम्ना विविक्तशयनासनम् ॥ ९५ ॥
षष्ठसंज्ञं समाख्यातं कायक्लेशाभिधं तपः ।
महोपसर्गनैःश्रांतं कर्तव्यं मुमनीषिभिः ॥ ९६ ॥
इदं बाह्यं तपः पोढा चकारेति स रेखया ।
जम्बूस्वामी महावीर्यो वैर्यस्यैकपदं महत् ॥ ९७ ॥
अभ्यंतरं तप प्रोक्तं मायश्चित्तं यदादिमम् ।
कुमार स्वीकरोति स्म सम्यग्दर्शनाभिधानकम् ॥ ९८ ॥
निश्चयादात्मधर्मेषु मोक्षमार्गेष्वनुद्धत ।
विनय समकार्षीत् स यथार्हं परमेष्ठिषु ॥ ९९ ॥
नातिक्रमो मुनीशानां नमस्कारक्रियादिषु ।
वैयावृत्त्यं तप' मोक्तं तत्तृतीयं सुखप्रदम् ॥ १०० ॥
शुद्धस्वात्मानुभूतः स्याद्दभ्यासात् परमं तपः ।
स्वाध्यायं निश्चयाच्छुद्धं चतुर्थमकरोन्मुनिः ॥ १०१ ॥
शरीरापाधिभवेषु ममत्वपरिवर्जनं ।
व्युत्सर्गाभ्यं तपस्तच्च पंचमं मुनिना कृतम् ॥ १०२ ॥
ततोऽप्यनुचरध्यानं तपः षष्ठमनुत्तरम् ।
कृत्स्नचिंतानिरोधेन यदेषतत्त्यावलंबनम् ॥ १०३ ॥
पोढेत्याभ्यंतरं शुद्धं ततपा मुक्तिकारणम् ।
स निर्विण्णमनाः सर्वं निरतिचारमादद ॥ १०४ ॥

अप्यभिव्यक्तरूपश्च ज्ञातज्ञातस्वरूपतः ।
यस्थौ शुक्लिमयेणोच्चैर्वाक्मनोयोगनिग्रहात् ॥ १०५ ॥
कषायारिचमूं भेत्तु बद्धकक्ष इवाभवो ।
भूत्वा प्रशमनैः स्वैः सन्मुखं योद्धुमुद्यत ॥ १०६ ॥
मन्मथस्य मिथामाराद्गतिं मार्गेव निम्नगा ।
प्रभारिवौ मद्ये मारो हेलया येन निर्जितः ॥ १०७ ॥
द्वादशांगमहाविद्यावारिधेः पारगः सुधी ।
द्रव्यभावादिभेदेन नैकधार्थमपञ्चकः ॥ १०८ ॥
एवमष्टादशाब्दानां व्यतिक्रांता इव क्षणं ।
जम्बूस्वामिनि घोरोग्र तप कुर्वति नैकधा ॥ १०९ ॥
तपोमासे सिते पक्षे सप्तम्यां च शुभे दिने ।
निर्वाणं प्राप सौधर्मो विपुलाचलमस्तकात् ॥ ११० ॥
अनंतसुखपाथोधी निर्ममं बकसूचितम् ।
अनंतदर्शनज्ञानं तमहं नौमि श्रेयसे ॥ १११ ॥
तत्रैवाहनि यामार्धे ध्यानयानगति प्रभोः ।
उत्पन्न केवलज्ञान जम्बूस्वामिमुनेस्तदा ॥ ११२ ॥
नष्टे मोहरिपौ ज्ञानदर्शनावरणक्षये ।
आसीत्पद्मासनस्थस्य ज्ञाम वीर्यावृतेः क्षयम् ॥ ११३ ॥
ततः केवलपूजार्थमाजग्मुस्त्रिदशाभ्ययाः ।
सोत्साहा सपरीवारा निजद्ध्यादिसमन्विताः ॥ ११४ ॥
प्रणमुश्च 'परीत्याय स्वामिनं त्रिजगद्गुरुम् ।
तत्स्वर्गमयमपारावपुष्पवर्षंताऽमराधिपा' ॥ ११५ ॥

पूजयित्वाय सामग्रया सुष्ठुपुः मधुमात्रात् ।
गयपयादिसद्द्‌वैरनौपम्यै सुरश्वरा ॥ ११६ ॥
जय मर्ववर्कदर्पदर्पसर्पापह मभा ।
जय कवलमार्तंड प्रकाशितजगत्त्रय ॥ ११७ ॥
स्तुत्वेति बहुधा स्तोत्रैः मांत्यकवलिनं जिनम् ।
ययुर्देवा निज धाम मन्यमानाः कृतार्थताम् ॥ ११८ ॥
विजहार ततो भूमौ भितो गंधकुटीं जिनः ।
मगधादिमहादेशमथुरादिपुरीस्तथा ॥ ११९ ॥
कुर्वन् धर्मोपदेशं स कवलज्ञानलोचनः ।
वर्षाष्टादशपर्यंतं स्थितवांस्तत्र जिनाधिप ॥ १२० ॥
ततो जगाम निर्वाणं केवली विपुलाचलात् ।
कर्माष्टकविनिर्मुक्तः शाश्वतानंतसौख्यभाक् ॥ १२१ ॥
ततोऽनंतरमेवासात्मविद्यासा मुनीश्वरः ।
मंते सल्लेखनां कृत्वा षष्ठेऽभूद्दिवि दिवरात् ॥ १२२ ॥
नाम्ना जिनमती सापि कृत्वा सल्लेखनां शुभाम् ।
ब्रह्मोत्तरे सुरेन्द्राऽभूच्छित्वा योषित्कुलिंगकं ॥ १२३ ॥
ततो धर्मवतस्ता वासुपूज्यजिनालये ।
सुत्वा चंपापुरे तत्र देवीजाता महर्द्धिकाः ॥ १२४ ॥
अथ विद्युच्चरो नाम्ना पर्यटन्निह सन्मुनिः ।
एकादशांगविद्यावामप्रीतो मितप्रभावः ॥ १२५ ॥
मथान्यैद्युः स निःसंगो मुनिर्पचशतैर्वृतः ।
मथुरायां महोद्यानमेत्यैत्यगमन्मुदा ॥ १२६ ॥

सदागच्छतस्तैस्तैश्च(?)कृत्य भानुरस्ताचलं भिय ।
घोरोपसर्गमेतेषां स्वयं द्रष्टुमिवाक्षमः ॥ १२७ ॥
अथमथोरचरमारीति काचिद्वनदेवता ।
मुने पंचदिनान्यत्र स्थातव्यं न त्वयाधुना ॥ १२८ ॥
आगत्य सम्र (?) यात्रायै यूथमेतादयस्त्विह ।
उग्रं बाधां करिष्यति युष्माकं साधुसत्तमाः ॥ १२९ ॥
अतस्त्वैतत्परित्यज्य स्थानमन्यत्र गम्यताम् ।
दुर्निमित्तं स्थमेतिं शास्त्रः सयमध्यानसिद्धये ॥ १३० ॥
इत्युक्त्वा सा गता तूर्णं चंडमारी निजालयम् ।
ऊचे विद्युच्चरं मान्यो मुनिमुद्दिश्य साम्प्रतं ॥ १३१ ॥
अहो वृद्धगणा यूयं मा कुर्वन्तु हठक्रियाम् ।
निष्प्रमादतया यात स्थानादन्यत्र गम्यताम् ॥ १३२ ॥
श्रुत्वैतन्मुनयः केचिद्दुर्निशंकिताशया ।
अस्तं गते दिवानाथे नेयं कालोचितक्रिया ॥ १३३ ॥
विमृश्यतां कीदृशो धर्मः स्वामिभिः शंकितामिथः ।
उपसर्गसहो योगी प्रसिद्धः परमागमे ॥ १३४ ॥
अथस्तत्र यथामाध्य भाविकर्मशुभाशुभम् ।
तिष्ठामो वयमत्रैव रजन्यां मौनधारयः ॥ १३५ ॥
निशम्यैतद्वचस्तेषां तस्थौ विद्युच्चरो मुनिः ।
नैष्ठं योगं प्रतिष्ठाप्य मौनमाश्रित्य धीरधीः ॥ १३६ ॥
ततोऽन्धतमसा व्याप्तमाशामास्य दुरीक्षणात् ।
विश्वं मिथस्तमायाता लयकाल इव क्षणात् ॥ १३७ ॥

अथांतरे समायाता भूतवेताश्च राक्षसा ।
इत्याऽद्भुतश्च पार्श्वता भीषणाकृतिधारकाः ॥ १३८ ॥
केचिन्मत्तकरश्चा दंदशूकनिभाः परे ।
केचित्तु कुक्कुट्याकारा¹ सतीक्ष्णा नखपक्षयः ॥ १३९ ॥
फत्कारादिरवं केचित्कुर्वतोऽतिभयानकाः ।
नभस्पृष्टाश्चयस्पृष्टैर्मांससंतानितस्ततः ॥ १४० ॥
सद्य श्रीपितसंस्मिश्ररूपास्तोफितपाणयः ।
निर्यद्धूमाग्निभीमास्याः कंठबद्धास्थिसंचयाः ॥ १४१ ॥
रक्ताक्षा व्याददानास्या केचिदस्त्राद्वनैर्मूढ़ताः ।
उरुस्थरुंडमालास्त हसंत इव भीमया ॥ १४२ ॥
गृहाणैनं गृहाणैनं मारयेति वधान्विताः ।
सहुंकाररवं रौद्रा रावावष्टापराः परे ॥ १४३ ॥
मद्यामास्फाल्य मद्दैन ताडयेत् कुक्तिभीषणाः ।
भरयनं मरुन्मार्गे केचित्सप्रासनिर्दयाः ॥ १४४ ॥
इत्यादिविविधापायैः पापाः पापविचारकाः ।
चक्रुर्महोपसर्गं च मुनीनां वक्तुमक्षमं ॥ १४५ ॥
तत्र विद्युच्चरा धीरा महाधैर्यपरायणः ।
चिंतयामिति चित्ते स्वे शुद्धा द्वादशभावनाः ॥ १४६ ॥
जीवनाशां परित्यज्य कृत्वा सन्यासमादरात् ।
इषार्द्रिमिच्छुररव न मन्यमानः स्थिरोऽभवत् ॥ १४७ ॥
तथा यथा न्ययन्येऽपि मुनयः स्वस्थचेतस ।
उपसर्गमहा जाता ज्ञानसंमतिमक्षणाः ॥ १४८ ॥

१ भूषा । २ ...नार्थे ।

स्वाध्यायनिरताः केचित्केचिद्ध्यानावलम्बिनः ।
केचित्कर्मविपाकज्ञा तस्थुर्मेरुरिवाचलाः ॥ १४९ ॥

धर्मः सर्वसुखाकरो हितकरो धर्मं बुधाश्चिन्वते
धर्मेणैव समाप्यते शिवसुखं धर्माय तस्मै नमः ।
धर्मान्नास्ति परः सुहृद्भवभृतां धर्मस्य मूलं दया
तस्मिन् श्रीजिनधर्मकर्मनिरतैर्धर्मे मतिर्धार्यताम् ॥ १५० ॥

इति श्रीजम्बूस्वामिचरित्रे भगवच्छ्रीपश्चिमतीर्थकरोपदेशानुसरित-
स्याद्वादानवद्यगद्यपद्यविद्याविशारदपण्डितराजमल्लविरचिते साधु
पासासुतसाधुटोडरसमभ्यर्थिते जम्बूस्वामि
निर्वाणगमनवर्णनो नाम द्वादश पर्व ।

# अथ त्रयोदशं पर्व ।

भूयास्स धर्मेष जम्बूस्वामी निष्कर्मतां श्रितः ।
साधुपासांगमस्यास्य तव श्रीसाधुशंकर ॥ १ ॥ इत्याशीर्वादः ।
पार्श्वनाथमहं नौमि ह्वारं विघ्नकर्मणाम् ।
वर्द्धमानं मुनाश्चापि प्रमाणाश्च निभाभवम् ॥ १ ॥
अथोपसर्गसंपूर्ता त च विद्युच्चराद्यः ।
मुनयो भावयामासुरिमाः पारछभावनाः ॥ २ ॥
अनित्या शरणा चैव संसृतेमाद्युचिंतनम् ।
एकत्वचिंतनं चैवमन्यत्वं च ततः परम् ॥ ३ ॥
अशुच्यास्रवभेदे द्वे संवरो निर्जरा ततः ।
लोकसंस्था तथा बोधिदुर्लभो धर्म एव च ॥ ४ ॥
संवेगवर्धनायैषमेषां तस्यानुचिंतनम् ।
अनुप्रेक्षाः स्मृतास्ताश्च द्वादशैवानुपूर्वतः ॥ ५ ॥
ये याता यांति यास्यंति यमिनः पदमव्ययम् ।
द्वादशैताश्च ताः सर्वा भावयित्वा शुभाशयाः ॥ ६ ॥
अन्यत्वं सर्वमेवैतद्वस्तुजातं चराचरं ।
वैभाविकस्वभावत्वात्कर्मणां रसपाकवत् ॥ ७ ॥
आकस्मोदयमेवैतत्कर्मश्रीभावविपर्ययतः ।
तन्निर्माणं कथं लोके नित्य भवितुमर्हति ॥ ८ ॥
अतः कर्मोदयाज्जाताः पर्याया मधुरादयः ।
स्यानुभूत्यैकमात्रत्वाच्छिभास्व तन्मर्मशुराः ॥ ९ ॥

प्रमाणादागमाच्चापि स्वानुभूते समक्षतः ।
तेषामनित्यसंसिद्धौ को विमुह्येत् सकर्मधीः ॥ १० ॥
कृत्वावधिं सहस्रांशुरुदेत्यस्तं महीतले ।
कृत्वावधिं यथा जीवा उत्पद्यन्ते चतुर्गतौ ॥ ११ ॥
यथा वृक्षात्फलं पक्वं विशिष्टमनुभूतकं ।
आवश्यकं पतत्येवं तथा तनुभृतोऽप्यमी ॥ १२ ॥
जीवितं चपलं लोके जलबुद्बुदसन्निभम् ।
रोगैः समाश्रिता भोगा जराक्रांतं हि यौवनम् ॥ १३ ॥
सौन्दर्यं च क्षणध्वंसि संपदो विपदंतकाः ।
मधुबिंदूपमं पुंसां सौख्यं दुःखपरंपरा ॥ १४ ॥
इंद्रियारोग्यसामर्थ्यबलान्यभ्रोपमानि च ।
इन्द्रजालसमानानि राजसौधधनानि च ॥ १५ ॥
पुत्रपौत्रकलत्रादि मित्रबांधवसज्जनाः ।
संयोगश्चपलस्त्वाशु दृष्टनष्टा इव क्षणम् ॥ १६ ॥
इत्यध्रुवं जगत्सर्वं नित्यमात्मा सनातनः ।
भव्य सद्भिर्न कर्तव्यं ममत्वं वपुरादिषु ॥ १७ ॥

॥ अनित्यानुप्रेक्षा ॥

भ्रमतोऽस्य भवावर्ते जेतागतिचतुष्टये ।
यमारातिगृहीतस्य न कोऽपि शरणं भवेत् ॥ १८ ॥
यथा व्याघ्रगृहीतस्य मृगशावस्य कानने ।
पुण्योदयादृते कश्चिद्रक्षितुं न क्षमोऽङ्गिनः ॥ १९ ॥

१ विद्युत् ।

अणिमादिगुणयुक्तानां तेषामपि दिवौकसाम् ।
दिवः मृत्युर्विरेवासीत्का कथान्यशरीरिणाम् ॥ २० ॥
मणिमन्त्रौषधादीनि तावत्सर्वाणि संस्पृशी ।
यावद्यमकरालोऽसौ यमो नायाति सन्मुखम् ॥ २१ ॥
कृतान्तेन गृहीतोऽसौ कुपितेन यदा तदा ।
इन्द्रचक्रखगेन्द्राद्यैः क्षणं त्रातुं न शक्यते ॥ २२ ॥
मत्वेत्यशरणं विश्वं शरण्यं जैनशासनम् ।
उपादेयतया सद्भिर्गृहीतव्यं प्रयत्नतः ॥ २३ ॥
अर्हन्त शरणं सिद्धाः साधवः शरणं त्रिधा ।
शरणं तत्प्रणीतश्च धर्मः सर्वत्र धीमताम् ॥ २४ ॥
मत्वेति धीमतैरेवं धर्मः कार्यः स च द्विधा ।
व्यवहारात् क्रियारूपा निश्चयादात्मदर्शनम् ॥ २५ ॥
॥ अशरणानुप्रेक्षा ॥
द्रव्यं क्षेत्रं तथा कालो भवो भावस्तथैव च ।
एतत्सौपपदाम्नायात् संसारः पंचधा स्मृतः ॥ २६ ॥
तावत्स द्रव्यसंसारो लक्ष्यो सूक्ष्मार्थदर्शिभिः ।
कर्मनोकर्मरूपेण पुद्गलादानलक्षण ॥ २७ ॥
गृहीताश्चागृहीताश्च मिश्राश्चापि निसर्गतः ।
त्रिधेति पुद्गलास्तथा लोकेऽस्मिन्नभिधिताः स्फुटम् ॥ २८ ॥
तद्विवक्षितजीवेन ते येषामपीह पुद्गलाः ।
कर्मनोकर्मभावेन नीत्वा वारामनेकशः ॥ २९ ॥
मुक्तोज्झिताः पुनस्त्वापि ग्रहनीत्वा पुनस्तथा ।
एवं समुदितः सर्वो द्रव्यसंसार उच्यते ॥ ३० ॥

सोऽप्यनेनैव जीवेन कृतपूर्वो ह्यनन्तशः ।
क्षेत्रमाकाशदेशः स्यात्स चाणुमितोऽङ्गिनः ॥ २१ ॥
हानिवृद्धिक्रमाद्व्याप्तो जन्मना मृत्युनाथवा ।
कनकाद्रिमहास्कन्धाः सन्त्यष्टौ मध्यदेशकाः ॥ २२ ॥
विख्याता गोस्तनाकारैर्मूलं लोकस्य मध्यगाः ।
अथ कुर्वंस्तदारभ्य कश्चिज्जीवो विपद्यते ॥ २३ ॥
तावन्मानप्रदेशांश्च नीत्वोत्पन्नो निजोदरे ।
मुक्तायुः सोचिते काले मृत्वोत्पन्नो स कुत्रचित् ॥ २४ ॥
एकप्रदेशमतिक्रम्य तत्रैवोत्पद्यते पुनः ।
एवं क्रमात्परित्यज्य तमेकैकं प्रदेशकम् ॥ २५ ॥
कश्चित्समूर्छते जीवे मृत्वा मृत्वा पुन पुनः ।
यावतः सर्वलोकस्य सर्वदेशाः प्रपूरिताः ॥ २६ ॥
सर्वत्रैकेन जीवेन जन्मना मृत्युना तथा ।
तदा समुदितः सोऽयं क्षेत्रसंसारलक्षण ॥ २७ ॥
सोऽप्यनर्थं कृतोऽनेन पूर्णो वारानन्तशः ।
निरंशः समयः काल साऽपि संलक्ष्यते जिनैः ॥ २८ ॥
अणोः पर्यटतो मन्दगत्या शुद्धस्य मानतः ।
अथोत्सर्पापसर्पाभ्यां देहादीनां समासतः ॥ २९ ॥
सङ्ख्यान्वर्याभिधानौ द्वौ कालभेदौ यथाक्रमम् ॥ ४० ॥

१ तत्र सर्वकालं जीवात्ममध्यमप्रदेशा निरपायाः सर्वजीवानां स्थिता एव । केवलीनामपि अयोगिनां सिद्धानां च सर्वे प्रदेशाः स्थिता एव । व्यायामदुःखपरितापोद्रेकपरिणतानां जीवानां अष्टौ आत्ममध्यप्रदेशवर्जितानां इतरे प्रदेशा अवस्थिता एव । शेषाणां प्राणिनां स्थितास्थितास्थेति । तत्त्वार्थराजवार्तिके ५. ९ १ ।

तथयोत्सर्पिणीकालो यावदुक्तप्रमाणकः ।
सोऽप्यवसर्पिणीकालस्तावानेव जिनागमे ॥ ४१ ॥
कोटीकोट्यो दशाब्धीनां वार्द्धीनां स्वस्य संख्यया ।
प्रमाणं तत्र प्रत्यक्षं दर्शितं विश्वदर्शिना ॥ ४२ ॥
तस्यामारभ्य मानायामाद्यैकस्मिन्निरंशके ।
समयमन्त्या यदा कश्चित् भवेत्सारम्भकस्तदा ॥ ४३ ॥
भुक्त्वा स्वायुर्यथाकालं मृत्वोत्पन्नश्च कुत्रचित् ।
तस्यां द्वितीयेऽस्मिंश्चेदुत्पन्नो भवेत्तदा ॥ ४४ ॥
अतिक्रान्ता निरंशः स समयश्चैकमात्रकः ।
विद्यमाऽन्यं क्रमः सञ्जिर्नान्यादृशः क्रमः कश्चित् ४५ ॥
यावंत समयास्तस्या मन्यमाना निरंशकाः ।
नीताः सर्वेऽपि जीवेन जन्मना मृत्युना च ते ॥ ४६ ॥
तदायं भ्रमितः सर्वः कालसंसृतिरिष्यते ।
साम्प्रतमुक्तपूर्वस्य जीवस्यानंतशः स्फुटं ॥ ४७ ॥
भवो जीवस्य पर्याय साऽप्यायुरुदयश्च कर्मसात् ।
नारकश्चापि तिर्यञ्चो देवश्चेति चतुर्विधः ॥ ४८ ॥
वत्सराणां त्रयस्त्रिंशदब्धया क्षिति नारक ।
उत्कर्षेणापकर्षेण सहस्राणि दश स्थितिः ॥ ४९ ॥
तत्र यदा नरः कश्चिज्जघन्यायी स्थितिमनुपमां ।
भुक्त्वाम्बिता मृतश्चाथ पञ्चम्येत यतस्ततः ॥ ५० ॥
यदा तु दैवयोगात्स स्थितिं प्राप्नोति तादृशी ।
प्रारम्भकस्तदा ज्ञेयो नान्यथा यतसत्तमैः ॥ ५१ ॥

जघन्यस्थितिवर्षाणां यावन्त समया स्मृता ।
तावन्तो वारानसकृत् ( कृत् ) मृता जातः पुनः पुनः ॥ ५२ ॥
एवं साधिकमेकेन ततोऽप्येकेन साधिकम् ।
समयेन यदायुः स्याद्वर्द्धमानं शरीरिणाम् ॥ ५३ ॥
तदाप्येष क्रमो ज्ञेयो नान्यथा तदतिक्रमात् ।
क्रमादीनाऽधिकस्यापि नोल्लंघ्य कदाचन ॥ ५४ ॥
वर्द्धमानं क्रमादायुः सर्वोत्कर्षं यदा भवेत् ।
पर्याप्ता भवसंसारो देवनारकयोस्तदा ॥ ५५ ॥
एवं तिर्यग्मनुष्याणां स्थितिरान्तर्मुहूर्तिकी ।
जघन्यायानुत्कर्षेण त्रिपल्योपमसंमिता ॥ ५६ ॥
अथारभ्य जघन्याद्या पूर्ववत्समयाधिकम् ।
पुनर्यथा क्रमादायुर्यावदुत्कर्षतां व्रजेत् ॥ ५७ ॥
नानायोनिष्विह सर्वं स युक्तः समवायवान् ।
उच्यते भवसंसारस्तल्लक्षणविदांवरैः ॥ ५८ ॥
साऽप्यनन्तैव जीवेन भ्रमिता यतस्ततः ।
हन्त नित्यनिगोदाद्या सर्वेणाप्यटता भवम् ॥ ५९ ॥
भावो जीवस्य पर्यायः परिणामगुणात्मकः ।
स चाशुद्धश्च शुद्धश्च द्विधा स्यात्समयागमे ॥ ६० ॥
परद्रव्यात्मकः कर्म ज्ञानाद्यावरणं स्वकम् ।
तद्विपाकनिमित्तोऽस्य भावोऽशुद्धः स जन्मिनः ॥ ६१ ॥
कृत्स्नकर्मक्षयाद्यस्तु भावो जीवस्य निष्क्रियः ।
स शुद्ध इति विज्ञेयो यथा सौख्यमतीन्द्रियम् ॥ ६२ ॥

तत्रोपात्तप्रयुक्तिस्वादशुद्धे परिवर्धनम् ।
शुद्धे भवि स्वरूपत्वाच्चास्ति स्वरशृंगवत् ॥ ६३ ॥
स्थितेरध्यवसायानां स्थानानीह सुसंख्यया ।
पतितानि षड्स्थानैर्लोकासंख्यातमात्रतः ॥ ६४ ॥
एवमध्यवसायानामनुभागोचितलक्षणाम् ।
पतितानि च षट्स्थानैर्लोकासंख्यातमात्रकाः ॥ ६५ ॥
लोकासंख्यातमात्राणि योगस्थानानि संख्यया ।
पतितानि चतुःस्थानैर्वृद्धिहानिक्रमादिति ॥ ६६ ॥
अतश्चैषामनंताः स्युर्भेदास्ते च निरंतराः ।
उत्कृष्टोऽनुत्कृष्टश्च जघन्योऽप्यजघन्यकः ॥ ६७ ॥
सर्वां जघन्यादारभ्य यावदुत्कृष्टतां नयेत् ।
जीवः सर्वानिमान् भावान् भावसंसार इत्ययं ॥ ६८ ॥

उक्तं च—

“पढमक्खो अंतगदो आदिगदे संकमेदि विदियक्खो ।
दोण्णि वि गंतूणंतं आदिगदे संकमेदि तदियक्खो ॥ १ ॥”[1]
कृते नित्यनिगोदाद्या भवसंसारभ्रमणतः ।
एषोऽपि भावसंसारः भाषा भवैरनंतशः ॥ ६९ ॥
पंचप्रकारसंसारं मत्वा मोक्षसुखार्थिनः ।
निःसंसारे निजात्मानं निधाप्याराधयंतु भोः ॥ ७० ॥

॥ इति संसारानुप्रेक्षा ॥

१ प्रथमाक्षः अन्तगत आदिगते संक्रामति द्वितीयाक्षः ।
द्वावपि गत्वान्तमादिगते संक्रामति तृतीयाक्षः ॥
गोम्मटसारजीवकांडे गाथा ॥ ४ ॥

एको द्रव्यस्वभावत्वादनादिनिधनः स्वतः ।
पर्यायार्थादनेकत्वेऽप्यस्य चिद्रूपमात्रतः ॥ ७१ ॥
एकाकी भ्रमते दीनो मोहकर्मावृतः शठः ।
कदर्थीपस्तिर्यगाखीकादश्वपूर्णैरितोऽश्रुतः ॥ ७२ ॥
कदाचिन्नारकं दुःखमेकाकी सहते जडः ।
न कोऽपि तत्र साहाय्यं कुर्याद्यावदिति क्षणम् ॥ ७३ ॥
एकाऽथ स्वर्गसौख्यानि भुंक्ते पुण्योदयादिह ।
तिर्यक्त्वेऽपि नरत्वेऽपि सहायपरिवर्जितः ॥ ७४ ॥
उत्पद्यतेऽथ पञ्चत्वं याति जीवो कदाचिव ।
तदापि पुत्रपौत्रादि मित्रबान्धवसज्जनाः ॥ ७५ ॥
ये कलत्रादयस्तेन नापि सार्द्धं पदं दधुः ।
त्रसस्थावरकायेषु दुःखयोनिसतास्वपि ॥ ७६ ॥
एकाकी भ्रमते प्राणी नानाक्लेशौघपीडितः ।
न सख्यश्रीऽपि तत्रासौ क्षणं यावदिति स्फुटम् ॥ ७७ ॥
एकस्तपोऽसिना हत्वा कर्मारातीः स्वपौरुषात् ।
केवलज्ञानसाम्राज्यं निर्भयं पदमश्नुते ॥ ७८ ॥
इत्येकत्वं परिज्ञाय जंतोः संसारमोक्षयोः ।
सावधानस्तयादेयो मोक्षोऽनंतसुखात्मकः ॥ ७९ ॥

॥ इति एकत्वानुप्रेक्षा ॥

वपुषोऽपि विभिन्नाश्चेज्जीवाः सलक्ष्यते क्षये ।
लक्षणादन्यतः स्फुटं कथं स्वीयाः सुतादयः ॥ ८० ॥

---

१ सहचारी ।

मिथ्यात्वं च कषायाश्च योगा विरतयस्तथा ।
संति भावाश्रवस्येह भेदाः श्रीजिनदेशिताः ॥ १०२ ॥
एभिर्द्वारैस्तु जीवानामाश्रवंतीह पुद्गलाः ।
यथा सच्छिद्रपोतस्य वारिमध्ये स्थितस्य च ॥ १०३ ॥
तत्त्वार्थानामश्रद्धानं श्रद्धानं वा तदन्यथा ।
मिथ्यात्वं प्रोच्यते मार्यैस्तच्च भेदादनेकधा ॥ १०४ ॥
सामान्यादेकमेवैतन्मिथ्यात्वं जातिरूपतः ।
विशेषात्पंचधा यद्वा लोकासंख्यातमात्रतः ॥ १०५ ॥
एकांतमतमिथ्यात्वं द्वितीयं विपरीतकं ।
तृतीयं विनयस्तुर्यं संशयोऽज्ञस्तु पंचमम् ॥ १०६ ॥
उक्तं च—
" एयंतबुद्धदरसी विवरीओ बंभ तावसो विणओ ।
इंदो वि य संसयिदो मक्कडिओ चेव अण्णाणी ॥ १ ॥ "
एतेषां लक्षणं मार्गैर्विज्ञेयं परमागमात् ।
यद्वासंख्यातलोकाः स्युः सूक्ष्मास्ते बुद्धगोचराः ॥ १०७ ॥
कर्षंत्यात्मानमेवाथ कषाया इति दर्शिताः ।
पंचविंशतिसंख्याका मोहकर्मोदयोद्भवाः ॥ १०८ ॥
क्रोधो मानश्च माया च लोभश्चेति चतुर्विधः ।
प्रत्येकं ते ह्यनंता स्यु(न्ता)नुबंधिन उदाहृताः ॥ १ ९ ॥
द्वितीयं तच्चतुष्कं स्यादप्रत्याख्यानसंज्ञकम् ।
प्रत्याख्यानं तृतीयं स्यात्तुर्यं संज्वलनाख्यया ॥ ११० ॥

---

१ एयन्तो बुद्धदरसी विवरीओ बंभ तावसो विणओ ।
इंदो वि य संसइओ मक्कडिओ चेव अण्णाणी ॥ गोम्मटसारे जीवकांडे गा. १६ ।

एवं संमिलिता वर्गाः कषाया षोडश स्मृताः ।
नोकषायास्तथा ज्ञेया सस्यया नव तद्यथा ॥ १११ ॥
हास्यो रत्यरती चैव शोको भीतिस्तथैव च ।
जुगुप्सास्त्रीनरक्लीबवेदाश्चोपेक्षिताः क्रमात् ॥ ११२ ॥
एवमेकीकृताः सर्वे पञ्चविंशतिसंख्यकाः ।
कर्मास्रवस्य कर्तृत्वान्महानर्थविधायिनः ॥ ११३ ॥
अविरतिस्तु विख्याता सर्वतो द्वादशात्मना ।
अंतर्भूता कषायेषु पृथगप्युपदेशिता ॥ ११४ ॥
इंद्रियाणि च पंचैव मनः षष्ठमुदाहृतम् ।
तेषामनिग्रहात्प्रोक्ता षोढा विरतिरित्यपि ॥ ११५ ॥
पंचस्थावरजीवानां षष्ठस्यापि त्रसस्य च ।
प्राणापरोपणं हिंसा षोढा सा चेति संमिता ॥ ११६ ॥
धर्मः स्वात्मानुभूत्यात्म प्रमादोऽनवधानता ।
हेतोः कर्मास्रवस्यास्य भेदा पञ्चदश स्मृता ॥ ११७ ॥
उक्तं च—
" विकहा तहा कसाया इंदियणिद्दा तहेव पणयो य ।
चदु चदु पणमेगेगं होंति पमादा हु पण्णरसा ॥ १ ॥ "
योगस्त्वात्मप्रदेशानां परिस्पंदक्रिया मतः ।
मनोवाक्कायरूपाणां वर्गणानां विपाकतः ॥ ११८ ॥
सोऽपि सत्यादिरूपेण भिद्यते नैकधा बुधैः ।
औदारिकादिभेदैश्च काययोगोऽप्यनेकधा ॥ ११९ ॥

---

१ विकथास्तथा कषाया इन्द्रियनिद्रास्तथैव प्रणयश्च ।
चतुश्चतुःपञ्चैकैकं भवन्ति प्रमादा खलु पञ्चदश ॥
गोम्मटसारजीवकाण्डे च १४ ॥

